॥ ॐ ॥

महाकविश्रीभासप्रणीतम्

# यज्ञफलम्

## नाटकम्

राजवैद्यजीवरामकालिदासशास्त्रिविरचितेन

संक्षिप्तप्राग्वक्तव्येन सहितम्

प्रकाशनस्थानम्

रसशाला औषधाश्रम, गोंडल, काठियावाड.

प्रथमावृत्तिः वि. सं. १९९७ मूल्यं रूप्यकपंचकम्

FN. 25--1--2000--25--7--41.

THE

# YAJÑAPHALA

of

Mahakavi

**Bhāsa**



with a short Introduction

by

Rajvaidya Jivaram Kalidas Shastri.



Published By

THE RASASHALA AUSHADHASHRAM,
Gondal, Kathiawar, India.

First Edition. 1941 Price Rs. 5 net.

THE RASASHALA ELECTRIC PRINTING PRESS. GONDAL.

# ॥ प्राग्वक्तव्यम् ॥

महाकवेर्भासस्य बहोः कालात् कालिदासादिभिरपि नाटकनिर्माणचणैरर्हिततत्कृतित्वादनेकालङ्कारिकविहितस्य तन्नामकृत्युल्लेखस्यानल्पगौरववैदुष्योदाहृतिरूपत्वाच्च महती नाटककृत्कीर्तिः। अतर्कितकृत्यबलात्कालप्रभावात् तादृशानेकप्रकृष्टविद्वद्भिर्देधीयमानकीर्त्तिगीतेः परीक्षाश्रयाशास्पृष्टहारिकवित्वनिदर्शनस्वप्नवासवदत्तस्यापि तस्य कवितामियस्य नामतोऽन्यन्नादर्शि चिरात्काव्यदर्शनोत्कैः कवितानिकषीभूतमतिभिर्विद्वद्भिः। अहो, दुर्दैवकोपग्रस्ततैव वाङ्मयस्य यत्तादृशाखिलगुणानां काव्यानामपि चिरमदृश्यताऽभवत्। तस्य महाकवेर्ग्रन्थरत्नानां सुचिरमदर्शनं विधिप्रियया सर्वविद्यावैमल्यविधात्र्याप्यसह्यमिवामानि। ततो गते बहौ काले सम्प्रति स्वःस्थैर्महामहोपाध्यायैर्विद्वन्मणिभिर्गणपतिशास्त्रिभिस्त्रयोदश ग्रन्थास्तस्य कवेर्द्वादशोत्तरैकोनविंशे (१९१२) ख्रिष्टाब्दे लब्धाः प्रकाशिताश्च। तदाप्रभृत्येव सकलश्रेष्ठविद्वज्जनालोचनविषयतां गतोऽयं भासनिबद्धो रूपकगणो यं बहवश्छात्रा न केवलमस्मिन्देशे किन्तु हरिवर्षादिष्वपि पापठति। स्तुवन्तः पठन्तश्च रसिकाः कतिपये दोषज्ञास्तेषां रूपकाणां भासकृततामधिकृत्य संशेरयति। वयं तु तानि सन्ति, उत न वा भासकृतानीति प्रकृतानुपयोगि सम्प्रति प्रतीमः।

सुधीभिस्तत्तन्मतोपोद्बलनं तत्र तत्रैव द्रष्टव्यम् । प्रकृतरूपकोपोद्घाते नामकृतं न्यसिसिषन्तोपि स्तोकं प्रकृतपदवीं जह्मिः । तेषां भासकविकृतत्वं विचारयन्तो भारतीया अन्ये च विद्वांसस्त्रीन्निर्णयानवीभवन् । सूक्ष्मं विचार्य बहुभी रसिकैर्नैतानि रूपकाणि तादृश्याभान्ति येषु लब्धयशसो भासस्यालोकलभ्यो रसभावगिराद्युत्कर्षस्ततो न तस्य कवेर्भवितुमर्हन्तीत्यभिप्रेतम् । अपरे विद्वांसस्त्विमे ग्रन्था अकृत्रिमप्राचीनलेखभारतीसरणिपूर्णा भासकृता इति मन्यन्ते । वदन्ति केचिदपरे परीक्षानियोजितस्वमनीषाविभवा यद्भासकृतानां रूपकाणां संक्षेपरूपाण्यल्पपरिवृत्तिभाञ्ज्येतानीति । स्वं स्वं मतं सर्वान्यसेमुषीपरिभवक्षमं दर्शयन्तस्ते सर्वे बहून् हेतून् हेत्वाभासांश्च यथामति पुरः स्थापयन्ति । गुर्वी दुरवगमा हीयं विचारणा बहु विस्तरमपेक्षते । ततश्चात्रैतावदुल्लिख्य प्रकृतेऽल्पं वाच्यं ब्रूमः । नानानेकागमशाखान्संस्कृतग्रन्थान् बिभ्रत्यस्माकं हस्तलिखितग्रन्थभाण्डागारे द्वे पुस्तके एकस्यैव ग्रन्थस्यास्मदृदृष्टिगोचरीभूते आस्ताम् । तयोरुभयोर्भाषाया अतिप्राचीनसंस्कृतत्वाद्वस्तुकल्पनायाः श्रेष्ठत्वाद्रसभावालङ्कारनाट्याङ्गानां मनोहरतमत्वाद्भाणादिवर्णितानेकसामान्यभासनाटकसंवादित्वाच्च **भासकृतत्वमस्माभिर्दृढं मन्यते ।**

तच्च यज्ञनाटकं यज्ञफलनाटकं वेति परमेश्वरकृपाया अस्मा-

भिरवापीति प्रसीदच्चेतसो वयं विदुषां दर्शनायाद्य प्रकाशयाम। एकस्य पुस्तकस्यान्ते 'इति यज्ञनाटकं समाप्तं' इति दर्शनाद्यज्ञनाटकमिदमिति नैव संदेहावसरः। किन्तु नाटकवस्तुनि यज्ञफलस्य शब्दतोऽर्थतश्च बहुत्र दर्शनादन्यस्मिन् पुस्तकेऽन्ते 'इति यज्ञफलं संपूर्णं' इति दर्शनाच्चास्माभिर्यज्ञफलमित्येतदभ्यधायि। यतः स्वप्नवासवदत्तस्यान्ते गणपतिशास्त्रिपुस्तके 'इति स्वप्ननाटकमवसितम्' इति दृश्यते। यतो लक्ष्यैकदेशे लक्ष्यमात्रग्रहणमिति न्यायाद्यज्ञफलमपि यज्ञनाटकमिति वक्तुं नानुचितम्। अद्य सप्तदशवत्सरा अगमन्यदा वाराणस्याः सुरतपत्तनात्पञ्चनददेशाच्च बहूनां हस्तलिखितपुस्तकानां निचयोऽस्माभिरलम्भि। यतोऽस्मान् प्राचीनपुस्तकसमाहरणोत्कान् ज्ञात्वाऽस्माभिर्नियोजिता अन्ये च सत्पुरुषाः काले काले प्रेषयन्त्येव हस्तलिखितपुस्तकान्यस्मभ्यम्। तस्मिन्पुस्तकराशौ द्वे शरीरे अस्य यज्ञफलनाटकस्यास्ताम्। वयं तु स्वयमेव गभीरं विविच्य ग्रन्थपरीक्षणं कुर्मः। ग्रन्थोऽयं क्रमप्राप्तपरीक्षः परारि भासकृतोऽस्माभिर्निश्चितोऽभवत्। नानानेककार्यव्यापृता वयं तदैव नास्य ग्रन्थस्य प्रकाशनं कर्तुं प्राभवाम। सम्प्रति लब्धप्रकाशनक्रमोऽयं नाटकरत्नभूतो ग्रन्थो रसिकानां विदुषां पुरः सहर्षं स्थाप्यते। उभयोर्हस्तलिखितपुस्तकयोराकारादि निदर्श्यते तद्यथा—

(क) पुस्तकमेतदेव मुद्रितम्—तस्य चतुर्दशपत्राण्युभयतोलिखितदेवनागराक्षराणि वर्तन्ते । पत्राणां प्रत्येकं तिर्यग् दैर्घ्यं दशाङ्गुलप्रायम् । द्वात्रिंशद्वा त्रयस्त्रिंशद्वोभयतः पंक्तीर्दधदुपरि भागाधरभपङ्क्तिपर्यन्तं सार्धसप्ताङ्गुलप्राय आयामः । तस्यान्ते च "इति यज्ञनाटकं समाप्तं विक्रमार्क संवत् १७२७ आश्विन कृष्णपक्षे द्वितीयायां भौमवासरे लिखितं स्वामी शुद्धानन्दतीर्थ" इति विद्यते । अथ च—

(ख) पुस्तकमेतत् पूर्वस्मादर्वाक्तनम् । अस्य पाठा यत्र यत्रोपरिवर्णितात्पुस्तकात् भिद्यन्ते तत्राधःटिप्पणीरूपेण पाठभेदोऽस्माभिन्यसि । अस्य पुस्तकस्य तिर्यगायामः षोडशाङ्गुलप्रायः प्रतिपत्रम् । उभयतो देवनागराक्षराङ्कितानां दशाङ्गुलायामानाम् (उपरिभागादधोभागावधि) उभयतः पृथक् पञ्चविंशतिपंक्तिभृतां पत्राणां संख्या पञ्चदशमिता । अस्यान्ते च—"इति यज्ञफलं संपूर्णं विक्रमीय संवत्सर १८५९ मासानामुत्तमे पौषमासे सिते पक्षे पूर्णिमायां गुरुवासरे लिखितं देवप्रसादशर्मणा हस्तिनापुरनिवासी" इति दृश्यते । गीर्वाणगीर्वाङ्मयमेतन्नाटकं कियदुपकरिष्यतीति तु विद्वांसो रसिकाः स्वयमेव विवेक्ष्यन्ति । कुत्रापि समस्तं कुत्रापि व्यस्तं च कवेरप्रतिमप्रतिभं कवित्वमस्मिन्नाटके मनोहारि दृश्यते । वाल्मीकीयरामायणस्य बालकाण्डकथास्मिन् रूपके कविना वर्णिता ।

अस्य नाटकस्यान्ते 'इति निर्वहणाङ्कः षष्ठः' इति लिखितं दृश्यते । किन्तु ततः पूर्वमेव षष्ठाङ्कस्य समाप्ति- र्दर्शितास्ति । ततश्चायं सप्तमोऽङ्को भवेत् । किन्तु लेखकप्रमादेन निर्वहणाङ्कस्य पृथग्गणनया वा 'षष्ठः' इति दर्शनादस्मा भिरपि तथैव मुद्रितम् ।

यत्तु 'पतञ्जलेर्योगशास्त्रम्' इत्यस्य रूपकस्य चतुर्थेऽङ्के दृश्यते तदधिकृत्य परीक्षकाणां विदुषां मनसि किमपि शङ्काव- सरकारि भवेदित्यत्र किमपि ब्रूमः । ब्रह्मसूत्रकर्तुर्महर्षेर्व्यासात् पूर्ववर्ती योगशास्त्रकर्त्ता भगवान् पतञ्जलिरिति तु सुविदित- मेव शास्त्राणि मनतां विदुषाम् । यत 'एतेन योगः प्रत्युक्तः' (२।१।३) इति ब्रह्मसूत्रे दृष्टत्वाद्भगवतो व्यासस्य योगसूत्र व्याख्यातृत्वाच्च नैतद्दुरवगमम् । ततश्च व्यासात्कियत्पूर्वमसा- ववर्त्ततेति न निर्श्चीयते । दशरथे जीवत्यप्यस्य विद्यमानता सम्भवेत् । यद्वा कवयः स्वकालप्रचलितामपि स्थितिं दर्श- यन्त्येव । तद्यथा—शिशुपालवधे सौगतानामुल्लेखः (२।२८) भगवतः श्रीकृष्णस्य समये सौगताः (बौद्धाः) आसन्किम् । तथा च नैषधीयचरिते (१७।७०) पाणिनेस्तस्य सूत्रस्यापि कृत उल्लेखः श्रीहर्षेण । नलसमये पाणिनीयं व्याकरणं नैवा- सीत् । एतेन ज्ञायते बहुत्र कवयः स्वकृतिषु स्वसमये विद्य- मानं कथानायकादिसमयेऽविद्यमानमपि वस्तु न्यस्यन्ति ।

ततोऽपि रामोक्तम् पतञ्जलेर्योगशास्त्र, मिति नानुपपन्नं भाति।

मुद्रणे बह्व्योऽशुद्धयो विद्यन्ते। मूलभूतपुस्तकस्य लिपिकरेणापूर्णज्ञातत्वात्—अस्माकमन्यानेककर्मव्यापृतत्वान्मुद्रितशोधनकृतो (Proof readr's) गीर्वाणभारत्या ज्ञानाल्पतायाः नासम्भवमिदम्। अतोऽस्माभिः स्वयमेव शुद्धिपत्रं विधायास्य पुस्तकस्यान्ते तन्न्यस्तमस्ति। तदपि शैघ्र्येण न पूर्णं भवेत्, अतो विद्वांसो महामतयः शोधयन्त्वौचित्यमनुज्झित्वेति निवेदयामः। अस्य रूपकस्यास्मिन्संस्करणे मूलपाठादधो याष्टिप्पण्यः सन्ति ता अस्मन्मित्रवर्यैः श्री गोपालदत्त शास्त्रिभिरल्मोडावसतिभिर्विहिताः। तेषां मते सर्व एव पण्डितैर्मन्यमाना अशुद्ध्याभासा नापाणिनीयाः। आर्षानार्षप्रयोगविचारश्च तेषां द्वितीयाङ्कारम्भे टिप्पण्यां विद्वद्भिर्द्रष्टव्य एव। सम्प्रति महाकविभासकृतस्य यज्ञनाटकस्य समासेनैवोपोद्घातं प्रदर्श्यैतद्विचारपदवीमारोहयितुं विदुषो निवेद्य विदुषां गुणग्रहणमाहात्म्येन कृतिनः स्वान् मंस्यमाना एतावत्तैव विरमामः।

| | |
|---|---|
| रसशाला औषधाश्रम | राजवैद्य |
| गोंडल, काठीआवाड. | जीवराम कालिदास शास्त्री |

विक्रमार्क संवत् १९९७ आषाढ

कृष्णैकादश्यां शनौ ता. १९-७-१९४१



# ॥ शुद्धिपत्रकम् ॥

| पृष्ठं | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ६ | ४ | ॥५॥ | ॥६॥ |
| ,, | ७ | जह्न | जण्ण |
| ,, | ,, | जह्ने | जण्णे |
| ,, | १० | जह्ना | जण्णा |
| ,, | १२ | जह्न | जण्ण |
| ८ | ७ | मारआ | मारओ |
| ९ | २ | रक्खामि | रक्‌खामि |
| १० | १ | दर्शन– | दर्शनै |
| १६ | ३ | जननी | जणणी |
| १८ | १५ | महाराआ | महाराओ |
| १९ | ६ | माणा | माणो |
| ,, | ,, | सुमित्ताह | सुमिताए |
| ,, | १४ | राणणीओ | रणणीओ |
| २० | ८ | पुमरिधा | पुमत्था |
| २१ | ९ | अहा | अहो |
| ,, | ,, | काला | कालो |
| ,, | ११ | कर | करै |
| २२ | १ | नभा | नभो |

| पृष्ठं | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| २३ | ५ | काऽपि | कोऽपि |
| २७ | २ | मन्त्रा | मन्त्रो |
| ,, | ३ | गापय | गोपय |
| ,, | ८ | आआ | आओ |
| २९ | २ | मनागी | मनागि |
| ३० | ७ | राजा | प्रतीहारी |
| ,, | १० | अज्ञा | अज्ञो |
| ३१ | ५ | यशोऽभूरि | यशो भूरि |
| ,, | १२ | कुता | कुतो |
| ३४ | ११ | अहा | अहो |
| ३६ | १० | भावयेत् | भाययेत् |
| ३८ | ७ | अहा | अहो |
| ,, | ९ | षण्णा | षण्णो |
| ३९ | ९ | काला | कालो |
| ४० | ७ | जीग्गो | जोग्गो |
| ,, | १२ | या | यो |
| ,, | १५ | वपुषा | वपुषो |
| ४४ | ५ | अणतण | अणत्तण |
| ४७ | ८ | करोदि | करेदि |

| पृष्ठं | पंक्तिः | अशुद्धं | शुद्धं |
| --- | --- | --- | --- |
| ४२ | १६ | अ.श्लो १८० | अ.८ श्लो. १४० |
| ४८ | १० | ज्जव | ज्जेव |
| ,, | १६ | ङवम् | ङीप् |
| ,, | १७ | वअण | वअणं |
| ५० | ६ | तण | त्तणं |
| ५२ | १५ | काऽपि | कोऽपि |
| ५३ | ८ | वइदुं | विदुं |
| ५७ | ६ | वशिष्ठा | वशिष्ठो |
| ,, | ९ | च्छुरवव | च्छुस्सैव |
| ५९ | १ | राआ | राओ |
| ,, | १० | (राजानं प्रति) | (प्रकाशम्) |
| ६३ | ६ | सुबुद्धे | सुबुद्धेः |
| ६४ | २ | बरिणो | वैरिणो |
| ६९ | १ | लब्धा | लब्धो |
| ७१ | ११ | मसा | मसौ |
| ७२ | २ | अत्र | अत्रै |
| ७३ | ७ | रान्त | राणा |
| ७५ | ७ | स्थः | स्थ |
| ७८ | १ | मान्यास्तु तनयाः | मान्याः स्तुतनयाः |
| ,, | ८ | मान्य | मान्यः |

| पृष्ठं | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ८७ | २ | तत्रव | तत्रैव |
| ,, | ३ | योषित | योषितः |
| ,, | ७ | दासीआ | दासीओ |
| ९२ | ३ | कुमाला | कुमारा |
| ९३ | ७ | सन्धते | सन्धत्ते |
| ९४ | ४ | क्षमेत सः | ॥३३॥ अनंतरं (ततः प्रवशति वशिष्ठः) |
| ९५ | २ | युक्त | युक्तै |
| ९८ | ३ | स्पृष्टा | स्पृष्टौ |
| ९९ | ६ | यथागुरवः | यथा गुरवः |
| ,, | १४ | जादि | जादी |
| १०६ | ५ | मुहाणि | मुहाइं |
| ,, | १० | राआ | लाआ |
| ,, | १६ | मुहोहिं | मुहेहिं |
| १०८ | ४ | रोएण | लोएण |
| ११२ | ६ | वयमा | वयम |
| १२८ | ११ | प्रकृतेः | प्रकृते |
| १२९ | ११ | नव | नैव |
| १३६ | ९ | यास्याय | यास्याम |
| १३८ | १२ | णिमितं | णिमित्तं |
| १४२ | ९ | किन्तु सदा | किंन्तु तस्य सदा |

| पृष्ठं | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| १४९ | १५ | दश | दर्श |
| १५२ | १२ | पसन्ता | प्रसन्ना |
| १५३ | ५ | रामणी | रमणी |
| १५७ | २ | जितारं | जितारिं |
| १५८ | ५ | शस्य | सस्य |
| १६० | १ | मनैा | मनो |
| १६१ | ११ | करा | पादा |
| १६४ | १४ | वरस्य | वैरस्य |
| १६६ | ६ | संतोषमल्प | संतोषोल्प |
| १६७ | ९ | कि | किं |
| १७० | १६ | कहदि | कहेदि |
| १७५ | ९ | त्यक्त | त्यक्तु |
| १७८ | ८ | उद्धर्तमानेऽद्रे | गाढोद्धृतेऽद्रे |
| १८३ | १ | आश्चर्य--दृष्टा | आश्चर्यं इयं हि दृष्टा |
| १८४ | ५ | रामः-- | रामः--इयं हि |
| १८८ | ३ | ति | स्ति |
| १९१ | १४ | राओ आअ, | राओ एत्थ आअ |
| १९७ | ४ | अद्यव | अद्यैव |
| २०० | ९ | पुत्रान्मे | पुत्रेभ्यो |
| २०२ | ५ | सदा | सरन् |
| २०६ | १ | चिदानद | चिदानन्द |

## ॥ यज्ञफल श्लोकानुक्रमणी ॥

श्री गणेशाय नमः

अथ

# कविकुलशिरोमणिश्रीभासकृतम्

# यज्ञफलनाटकम्

प्रारभ्यते

( नान्द्यन्ते ततः प्रविशति सूत्रधारः । )

**सूत्रधारः—**

रामः कृपाया भरतो मनोज्ञः।
पायात्सचापः शुभलक्ष्मणश्च।
शत्रुघ्नवीरो मुनिमन्युरक्षी।
सदारसोत्साहवपुः प्रसन्नः (1) ॥ १ ॥

---

(1) ॐ शिवं स्तात्पाठकेभ्यः । कृपाया अनुकम्पाया भरतोऽतिशयात्कारणात् "अतिशयो भरः" इत्यमरः । मनोज्ञो मनोहरः "कान्तं मनोहरं रुच्यं मनोज्ञं मञ्जु मञ्जुलम्" इति विशेष्यनिघ्नेऽमरः । चापेन सह वर्तमानः सचापः, धनुर्धर इत्यर्थः । शुभः कल्याणकर्ताऽत एव लक्ष्मणः शोभान्वितः । शुभशोभान्वितो वा "लक्ष्मीवाँल्लक्ष्मणः श्रीलः श्रीमान्" इत्यमरः । शत्रून् हन्तीति शत्रुघ्नः ।

( नेपथ्याभिमुखमवलोक्य )

आर्ये इतस्तावदागच्छतु भवती ।

( प्रविश्य )

नटी—अज्जउत्त इअम्हि को णिओओ अज्जस्स ।

[ आर्यपुत्र इयमस्मि को नियोग आर्यस्य । ]

सूत्रधारः—आर्ये, अस्माकं प्रयोगदर्शनाय सङ्गतेयं परिषद् । तदिमां प्रसादयितुं कुसुमाकरकालमधिकृत्य गीयताम् ।

---

हन्तेः कः । स चासौ वीरश्च शत्रुघ्नवीरः । मुनीनामृषीणां मन्यून्यज्ञान् "मन्युर्दैन्ये क्रतौ क्रुधि" इति हैमः । रक्षति तच्छीलो यज्ञ-रक्षाकर्मणि साधुर्वा । सद्रा रसो रागो जनानुराग इत्यर्थः । उत्साहो-ऽमन्दता ताभ्यां सम्पन्नं वपुर्यस्य प्रसन्नश्च रामः पायाद्रक्षतात् युष्मानस्मान्वा पापाद्दुःखाद्वा ॥ पक्षे सचापः, सदारः, सप्रीतश्चासौ, सोत्साहं वपुः, उत्साहोपेतं वपुर्यस्य तादृशः प्रसन्नश्च कृपायाः कृपां विधाय "ल्यब्लोपे कर्मण्यधिकरणे च" (वा० on पा० २।३।२८) इति पञ्चमी । रामः पायात् । अथ च मनोज्ञो भरतः पायात् । शुभः शोभान्वितो लक्ष्मणः पायात् । शत्रुघ्नश्चासौ वीरश्च पायात् ।

शुभः कल्याणकर्तेत्यत्र "विनापि प्रत्ययं पूर्वोत्तरपदयो-र्लोपो वा वाच्य" इति वार्त्तिकेन कर्तृशब्दस्य वैकल्पिको लोपः ।

नटी—तह । [तथा ।] (गायति)

णोपल्लवसोहिदा लदाओ
सहआरा बहुपरिमलस्सन्दिणो ।
पसण्णाइं अ उववणाइं
हसंति मल्लिआकुसुमेहिं ॥ २ ॥

[नवपल्लवशोभिता लताः
सहकारा बहुपरिमलस्यन्दिनः ।
प्रसन्नान्युपवनानि
हसन्ति मल्लिकाकुसुमैः ॥ २ ॥ ]

सूत्रधारः—आर्यें साधु, तोषिता एते सर्वे त्वया।

(नेपथ्ये) कथं न सर्वे तोषिताः स्युः ।

सूत्रधारः— (श्रुत्वा) अये

उत्सवे दानसत्कारैः सम्राजः पुत्रजन्मनि ।
तोषिताशेषपौरोऽयं सुमन्त्रोऽत्र समागतः
॥ ३ ॥

---

अस्मिन्पद्ये निहतार्थासमर्थनादिपदन्यासानौचित्याभासः । किन्तु पदानां मुद्रालङ्कारविधायित्वाच्छ्लिष्टत्वाच्चोक्तदोषपरिहारः । मुद्रालङ्कारलक्षणं तु " सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः " इति । उपजातिवृत्तम् ॥

( निष्क्रान्तः )

**स्थापना**

(ततः प्रविशति सुमन्त्रः)

सुमन्त्रः—

पौरांस्तोष्य ब्राह्मणान्भोजयित्वा ।
दत्वाऽन्यानां श्रोत्रियेभ्यः शतानि ।
सर्वे कामाश्चार्थिनां पूरिता मे (2) ।
तत्किं न स्युस्तोषिता लब्धलभ्याः ॥४॥

(प्रविश्य)

कञ्चुकीयः—अमात्य, महाराज आज्ञापयति सर्वे पौरा जानपदाश्च यथेच्छं लब्धकामा भवन्तु । मा कस्याप्यर्थिन आशा अपूर्णा तिष्ठतु ।

---

(2) अत्र मयेत्यर्थे 'मे' इति वर्तते । तथा च वामनः "ते मे शब्दौ निपातेषु" ।

सुमन्त्रः—मया महाराजस्य मनोगतं ज्ञात्वा
स्वयमेव सर्वमेतत्कृतम् ।

कञ्चुकीयः—साधु अमात्य साधु ।

अमात्या नृपतेर्यस्य
जानन्ति मनसि स्थितम्।
कुर्वन्ति च शुभोदर्कं
धर्मं स्वर्गं स विन्दति ॥ ५ ॥

अन्यच्च अधिकरणद्वारि यत्र कुत्र वा ये (3)संयता भवेयुस्ते मोच्यन्ताम्, इत्यादेशः(4)

सुमन्त्रः—

न स्तेना न शठा न वेदवणिजो-
नान्याङ्गनाकामुकाः ।
मद्यद्यूतरता न चापि मनुजा-
राजद्रुहो लिङ्गिनः ॥

---

(3) संयताः बद्धाः । (4) राज्ञ इति शेषः ।

सौराज्येऽत्र कथं लभेत सुकृती
बन्धादिदण्डं ततः।
सम्राडेव सुतोदयेन विहितो
मुक्तः पितॄणामृणात्[5] ॥५॥

( प्रविश्य )

विदूषकः—भो, अज्ज क्खु सफलं महाराअस्स पुत्तजह्मकम्म। तस्सिं हि जह्मे अहं ण मोदएसु ण सगे जठरम्मि सकिवो। मए जाणिदं तदा चत्तारो ईदिसा जह्मा होहिंति जेण अप्पडिरहो मोदअवइरी होइस्सं। होदु मादिसं बह्मणं जेमइअ कहं ण सफलं जह्मकम्म भवे।

(5) cf ' न संयतस्तस्य बभूव रक्षितु-
र्विसर्जयेद्यं सुतजन्महर्षितः ॥
ऋणाभिधानात् स्वयमेव केवलम् ।
तदा पितॄणां मुमुचे स बन्धनात् ॥ " रघुवंशे ३।२०॥

[भो अद्य खलु सफलं महाराजस्य पुत्रयज्ञकर्म । तस्मिन्हि यज्ञेऽहं न मोदकेषु न स्वके जठरे सकृपः । मया ज्ञातं तदा चत्वार ईदृशा यज्ञा भविष्यन्ति येनाप्रतिरथो मोदकवैरी भविष्यामि । भवतु मादृशं ब्राह्मणं भोजयित्वा कथं न सफलं यज्ञकर्म भवेत् । ]

सुमन्त्रः—

अये सुन्दरक अद्य लब्धानि सुवर्णानि भवता ?

विदूषकः—किं मम सुवण्णेहि जाओ ण खाईअंदि ण पिईअंदि ण अ पहिरीअंति । किं अहं राआ वा वणिओ वा जेण सुवण्णाइं मह पिआइं होइंति

[किं मम सुवर्णैर्यानि न खाद्यन्ते न पीयन्ते न च परिधीयन्ते । किमहं राजा वा वणिग्वा येन सुवर्णानि मम प्रियाणि भवन्ति । ]

कञ्चुकीयः—भो महाब्राह्मण, तव केन कार्यम् ।

विदूषकः—मोदअभोअणेण ।

[ मोदकभोजनेन ]

कञ्चुकीयः—कति मोदकान्भोक्तुं भवान्प्रभुः ।

विदूषकः—केत्तूण सत्तुणो मारिअ महारहो महाराओ भूदो ।

[कति शत्रून्मारयित्वा महारथो महाराजो भूतः]

कञ्चुकीयः—दशसहस्राणि शत्रूणां यो जयति स महारथो भवति ।

विदूषकः—

अहं ता दससहस्समोदअमारओ महारहो ।

[अहं तर्हि दशसहस्रमोदकमारको महारथः ।]

कञ्चुकीयः—नैकस्मिन्दिने कोऽप्ययुतसंख्यान्मोदकान् भुंक्ते ।

विदूषकः—कथं एकस्सि दिनेम्मि महारहो दससहस्साइं सत्तुणो मारेदि ।

[कथमेकस्मिन्दिने महारथो दशसहस्रसंख्यान् शत्रून्मारयति]

कञ्चुकीयः—तत्र तु केचिद्धन्यन्ते केचित्पलायन्ते केचिच्छरणागता विजेत्रा रक्ष्यन्ते ।

विदूषकः—अहं पि बहुणो मोदआओ मारेमि

बहुणो चूण्णीकरिअ खिवामि बहुणो किवाए रक्खामि अ।

[अहमपि बहून्मोदकान्मारयामि बहूंश्चूर्णीकृत्य क्षिपामि बहून्कृपया रक्षामि च।]

सुमन्त्रः—बाभ्रव्य, वैतण्डिका न शाम्यन्ति हेतुभिः। श्रृणु। अहं कृतकार्यो महाराजमभिनन्दितुं गच्छामि। [अग्रतोऽवलोक्य] अहो इत एवागच्छति सपरिजनो महाराजः

कञ्चुकीयः—अहं स्वनियोगमशून्यं कर्तुं गच्छामि।

[निष्क्रान्तः]

विदूषकः—

अहं भुत्तावसिट्ठमोदआणि रक्खिदुं गच्छामि।

[अहं भुक्तावशिष्टान्मोदकान् रक्षितुं गच्छामि।]

[निष्क्रान्तः]

सुमन्त्रः—अयमसौ देवो वार्धकेऽपि रमणीयाकृतिः। अनवरतराजकर्मप्रवृत्तोऽप्यश्रान्तः प्रसन्नश्च देवः।

यज्ञैरनेकैर्व्यवहारदर्शनै-
युद्धैश्च दैत्यैर्मृगयाविनोदनैः ।
दुःखापनोदेन नृणां च सन्ततं
कालं नयत्येष न खिद्यते तथा ॥७॥

तथा च

युवेव कुर्वन्निजकर्म नित्यं-
वृद्धत्वमाप्तो न नतो महौजाः ।
प्रजाः परे चास्य नृपस्य नाम ।
श्रुत्वैव सद्यो वृजिनं[6] त्यजन्ति ॥८॥

(ततः प्रविशति सपरिजनो राजा)

राजा—राज्ये नास्ति रिपोर्भयं प्रकृतयो
धर्मार्थसंपद्युताः ।
नाभिध्या[7] न रुजो न चापमरणं-
नैवात्र कश्चिच्छुचः ॥

(6) वृजिनम् पापम् । अत्र व्यवहारविरोधि कर्मेत्यभिप्रेतम् ॥
(7) अभिध्या परस्वलोलुपता ।

काले वर्षति वारिदः कृषिफलं-
नाल्पं न चैवेतय(8)-
स्तत्सर्वं सुकृतेन मेऽत्र विहितं-
दैवानुकूल्यात्तथा ॥ ९ ॥

तथा च

वेदा अधीता रिपवो निरस्ताः ।
प्रजाः प्रजाः स्वा इव पालिताश्च ॥
इष्टं धनैश्च प्रचुरैः समन्त्रम् ।
न शिष्यते मे करणीयमद्य ॥ १० ॥
देवताः पितरो विप्रा आर्त्ताश्च शरणागताः ॥
पूजिता विधिवन्नित्यमिदं मम कुलव्रतम् ॥११॥
मनोरथाः पूरिता मे साम्प्रतं पुत्रजन्मना ।
तथापि मामकं चेतः परां तुष्टिं न विन्दति
॥ १२ ॥

---

(8) " अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः ।
प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः "

सुमन्त्रः—(उपसृत्य) जयतु महाराजः ।

प्रजापालनयोग्येषु पुत्रेषु निजकर्मणः ।
न्यस्य भारं भवच्चेतो लप्स्यते तुष्टिमुत्तमाम्
॥ १३ ॥

राजा—अये सुमन्त्रः । आस्यताम् । अमात्य, अद्य सर्वेऽर्थिनः सफलाशा भवन्तु ।

सुमन्त्रः—भूताः ।

राजा—श्रोत्रिया गोहिरण्यादिभिः सत्क्रियन्ताम् ।

सुमन्त्रः—सत्कृताः ।

राजा—बद्धा नरा मुच्यन्ताम् ।

सुमन्त्रः—

धर्मेण पृथिवीं कृत्स्नां राजन्रक्षितरि त्वयि ।
स्वर्गस्तिष्ठति सर्वत्र कोऽपि बद्धः कथं भवेत्
॥ १४ ॥

राजा—पूर्वपुण्यप्रभावोऽयं राज्ये मे बहुविस्तृते ।

अधर्मनिरतः कोऽपि बन्धदण्डं न लब्धवान्
॥ १५ ॥

सुमन्त्रः—अकार्यबुद्धिः पुरुषः कथं स्या-
द्भवादृशे राजति राजसिंहे(9) ।
सूर्ये निरभ्राम्बरवर्तिनि स्यात्।
कथं तमिस्रा गतिभङ्गहेतुः(10) ॥१६॥

किं च—
बद्धो न चेदस्ति नरो यदद्य ।
न बद्धमोक्षो न भवेदिदानीम् ।
पैत्र्याद्दृणादास भवान्निबद्धो-
मोक्षस्ततोऽभूद्भवतस्तु तस्मात्(11) ॥१७॥

---

(9) रामायणे बहुत्र दशरथो राजसिंह इति विशेषितः । यथा-
" तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुतविस्तरम् " १।१९।१.

(10) cf " सूर्ये तपत्यावरणाय दृष्टेः ।
कल्पेत लोकस्य कथं तमिस्रा " रघु० ५।१३.
" तमस्तपति घर्मांशौ कथमाविर्भविष्यति " शकुन्तला ५।१३.

(11) See note No 5.

राजा–सत्यमद्य विमुक्तोऽस्मि पितॄणामृणबन्धनात्।
अन्यं बन्धं प्रपन्नोऽस्मि दृढं तेन न मुच्यते
॥ १८ ॥

सुमन्त्रः—कथमिव–

राजा—अध्याप्या विनयं श्रुतं नृपगुणं–
वाशिष्टधर्मान्वितं–
रागद्वेषविवर्जितेन मनसा
योग्यं प्रजारक्षणम् ।
दिव्यास्त्राणि रणाङ्गणे परगणं–
भीतं यथा कुर्वते ।
चत्वारस्तनया तथा च (12)विधिव–
त्ते पोषणीया मया ॥१९॥
एतत्सर्वं न कुर्यां चेद्धर्मत्यागो भवेन्मम ।
ततो बद्धोऽस्मि धर्मेण दृढं पुत्रोदयादहम्
॥ २० ॥

(12) विधिवत्पर्यन्तमध्याप्या इत्यनेन सम्बध्यते । पोषणीया इत्यत्र तु समुच्चयः ।

तथा च—

पुत्राणां प्रेमपाशेन नूनं बद्धोऽस्मि संप्रति ।
कामये न ततो मोक्षं यावदस्ति स्थितिर्मम ॥२१॥

(प्रविश्य)

प्रतिहारी—जेदु जेदु भट्टा । देवी कोसल्ला णिवेदेदि सब्बा अम्हे णिवुत्तउच्छआ महाराअं दट्ठुं इच्छामो । अहं ज्जेट्ठा पुव्वं संभाविदव्वा त्ति ।

[जयतु जयतु भर्ता । देवी कौशल्या निवेदयति सर्वा वयं निवृत्तोत्सवा महाराजं द्रष्टुमिच्छामः । अहं ज्येष्ठा पूर्वं सम्भावयितव्या इति ।]

राजा—विजये,

सद्वंशप्रभवा देवी पाणिग्रहणलालिता ।
आलम्बभूता यष्टीव(13) नोपेक्ष्या सांप्रतं मया ॥ २२ ॥

---

(13) अयं शब्दो ह्रस्वान्तो दीर्घान्तश्च । अत्रास्य क्तिजन्तत्वात् "कृदिकारादक्तिनः" (वा० on पा० ४।१।४५) इति विकल्पेन ङीष्।

(प्रविश्य)

चेटी—जेदु जेदु भट्टा। देवी सुमित्ता णिवेदेदि कुसलं अम्हाणं महाराअस्स किवाए। अहं दोणं कुमाराणं जननी पुव्वं संभाविदव्वा त्ति।

[जयतु जयतु भर्ता। देवी सुमित्रा निवेदयति कुशलमस्माकं महाराजकृपया। अहं द्वयोः कुमारयोर्जननी पूर्वं सम्भावयितव्या इति।]

राजा—विनयवति,

सर्वंसहा मध्यमेयं सुमित्रा मित्रवत्सदा।
वर्तमाना मन्नियोगे नैवोपेक्ष्या वशंवदा॥२३॥

(ततः प्रविशति मन्थरा विदूषकश्च)

मन्थरा—महाराअ अहिजणाणुरूवादरा कणिट्ठा वि गुणज्जेट्ठा तनुई वि सगउरआ महाराअस्स बहुमदा अप्पडिरहस्स केकअराअस्स दुहिदा देवी णिवेदेदि णूणं अहं ज्जेव पुव्वं संभाविदव्वा त्ति।

[ महाराज अभिजनानुरूपाद्वरा कनिष्ठाऽपि गुणज्येष्ठा तन्वी अपि सगौरवा महाराजस्य बहुमता अप्रतिरथस्य केकयराजस्य दुहिता देवो निवेदयति नूनमहमेव पूर्वं संभावयितव्या इति । ]

विदूषकः—( आत्मगतम् )

अम्मो सतज्जणो रण्डाए वअणोवण्णासो ।

[ अम्मो सतर्जनो रण्डाया वचनोपन्यासः । ]

( प्रकाशम् )

वअस्स उवेक्खिदा कणिट्ठा देवी किं करिस्सदि त्ति ओधारेहि तदो पडिवअणं देहि ।

[ वयस्य उपेक्षिता कनिष्ठा देवी किं करिष्यति इति अवधारय ततः प्रतिवचनं देहि । ]

राजा—( स्वगतम् )

एषा प्रतिज्ञातसुताभिषेका(14)
नोपेक्षणीयाद्य सुतं प्रपन्ना ।

---

(14) एषा कथा रामायणे विद्यते । तथा च भरतं प्रति रामः
" पुरा भ्रातः पिता नः स मातरं ते समुद्वहन् ।
मातामहे समाश्रौषीद्राज्यशुल्कमनुत्तमम् ॥ " (२।१०७।३)
प्रतिज्ञानाटकेऽपि दृश्यते वृत्तमेतत् ।

सिंहीव दुर्वारमहाप्रकोपा
राज्ञी समानानुनयेन धार्या ॥ २४ ॥
( प्रकाशम् )
मन्थरे क्रमेण तिसृभिरेव देवीभिराहूतोऽस्मि।
धर्मार्थकामेषु यथैक एव
न सेवनीयोऽधिकमात्मविद्भिः ।[15]
तथैव तिस्रः ससुता महिष्यः
सम्भावनीयाः सममेव भद्रे ॥ २५ ॥
ततः सर्वा मध्यमे मन्दिरे ममागमनं पालयन्तु ।

मन्थरा—( स्वगतम् )
हुं ण बहु माणेदि मह देवीं ।
[ हुं न बहु मन्यते मम देवीम् ]
( प्रकाशम् )
जं महाराआ आणवेदि ।
[ यन्महाराज आज्ञापयति । ]

(15) cf "धर्मार्थकामाः सममेव सेव्याः
यो ह्येकसक्तः स जनो जघन्यः"

( प्रतीहारी चेटी मन्थरा च निष्क्रान्ताः )

राजा—अमात्य त्वमपि गत्वा सर्वा राज्ञीः प्रसादय ।

सुमन्त्रः—यन्महाराज आज्ञापयति ( निष्क्रान्तः )

विदूषकः—भो वअस्स तुह तिहिंसु देवीसुं समाणो माणा । सुमित्ताह दुवे पुत्तका ते केकयीपुत्तादो अद्धं माणं लहिस्संदि ।

[ वयस्य तव तिसृषु देवीषु समानो मानः । सुमित्राया-द्वौ पुत्रौ तौ कैकेयीपुत्रादर्धं मानं लप्स्येते । ]

राजा—वयस्य

यथा पुमर्थाश्चत्वारः सुतास्तुल्यास्तथा मम।
मत्वाल्पं वेदमेकं तु न विप्रा वैदिको भवेत् ॥ २६ ॥

विदूषकः—( आत्मगतम् )

एदस्स तीणिहो राण्णीओ त्तिवग्गतुल्ला-ओ । चत्तारो पुत्तआ चतुव्वग्गतुल्लाओ

चतुव्वेदतुल्लाओ अ । पञ्चमे समुवट्ठिदे किं कहिस्सदि ।

[ अस्य तिस्रो राज्यस्त्रिवर्गतुल्याः । चत्वारः पुत्राश्चतुर्वर्गतुल्याश्च । पंचमे समुपस्थिते किं कथयिष्यति ]

( प्रकाशम् )

जइ अहं तुह कणिट्ठो वअस्सो पुत्तकेहिं
सह पोसणीओ ण ममाह तुह सिणेहो होइ।
जदो पुमरिधा चत्तारो ज्जेव वेदा अ ण पंच।

[ यदि अहं तव कनिष्ठो वयस्यः पुत्रैः सह पोषणीयो न मयि तव स्नेहो भवति । यतः पुमर्थाश्चत्वार एव वेदाश्च न पञ्च । ]

राजा—( स्मितं कृत्वा )

महायज्ञा यथा पञ्च तुल्यमाना द्विजन्मनाम् ।
तथा यूयं पञ्च मम मान्या भवथ मा शुचः ॥ २७ ॥

विदूषकः—( आत्मगतम् )

ण एत्थ छट्ठो । इमस्स वअणपाडवं जा-
णिदं भवे ।

[ नात्र षष्ठः । अस्य वचनपाटवं ज्ञातं भवेत् । ]

( प्रकाशम् )

किं पुत्तजम्मेण तुमं बुभुक्खां पि विसुमरिदो । अत्थं गच्छदि भअवं दिवाअरो ।

[ किं पुत्रजन्मना त्वं बुभुक्षामपि विस्मारितः । अस्तं गच्छति भगवान् दिवाकरः । ]

राजा—अहो सन्ध्याकालो भूतः । तथा हि-

कलं कूजन्तीमे शरणतरुमेत्येह विहगाः
नभःस्थश्चार्धेन्दुः प्रसरति करैर्लब्धसमयः ।
(16)घृणीनां(17)पूगोऽयं वत दिनकरस्य क्षयमगात्
प्रकाशो दीपानां रजनिवदनालङ्कृतिरिव ॥२८॥

अपि च

---

( १६ ) घृणीनां किरणानाम्

( १७ ) पूगः समूहः

नभादेशाद्भूमौ किमयमवतीर्णो हिमकरः
सरस्तोये +राजन्कुमुदसुमनोभिः परिवृतः ।
परीतः सामन्तैर्मुदितवदनैः शासनकरै-
र्महाराजः सर्वानिव नियतकर्मोपदिशति॥२९॥

( निष्क्रान्तौ )

॥ इति प्रथमोऽङ्कः ॥



+ तिष्ठन् ( ख ).

## ॥ द्वितीयोऽङ्कः ॥

( ततः प्रविशति कञ्चुकीयः )

कञ्चुकीयः—आज्ञप्तोऽस्मि महाराजेन भो बाभ्रव्य धारागृहसनाथं ग्रीष्मोद्यानं गत्वा पश्य यथा तत्र न कोऽपि परिजनोऽद्य मध्याह्ने तिष्ठेदिति। परःशता महाराज्ञो[1] विहारा

(1) महाराज्ञ इत्यत्रापाणिनीयताभासः। पाणिनिमनुसृत्य तु " राजाहः सखिभ्यष्टच् " ( ५।८।९१ ) इति टच् प्राप्नोति। ततश्च सर्वसंमतं ' महाराज ' इति रूपं भवति। अतो महाराजस्येति भवितुं युक्तम्। एतादृशः प्रयोगाः प्रायेण लभ्यन्त एव प्राचीनग्रन्थेषु। ते च आर्षा अपाणिनीयाश्चेति मन्यन्ते। अपाणिनीयत्वमेषां न शुद्धत्वविहन्तृ मन्तव्यमिति बहूनां विदुषां मतम्। किन्त्वत्र विचार्यमिदमस्ति यद्यत्पाणिन्युक्तविरोधि कुत्रापि दृश्यते तत्सर्वमेवार्षं मन्येत किम्। वयं तु ब्रूमो यदार्षा अपि त एव शब्दप्रयोगा ये श्रुतिषु दृश्यन्ते। तेषामपि साधुत्वं कथमस्तीति पाणिनिना समासेन बाहुलकादिना च दर्शितमेव। यथा कर्णैरिति प्रयोक्तव्ये कर्णेभिरिति प्रयोगश्छन्दसि दृष्टत्वात्पाणिनिसम्मतत्वाच्चार्षत्वेऽन्तर्भवति। किन्तु कर्णैभिरित्यादिकिमपि श्रुत्याद्यदृष्टं कुत्रापि स्यात्तदनार्षमशुद्धं च मन्येत। प्राचीन-

कविनिबन्धेषु क्वचिदार्षा अपि प्रयोगा दृश्यन्ते । यतस्ते कवयोऽजस्रमभ्यस्तार्षवाङ्मयाध्ययना बहुत्रार्षाणि पदानि स्वनिबन्धेषु न्यधुः । यतस्तेषां व्यवहारायार्षं वाङ्मयमेव बह्वासीन्न काव्यादि विस्तृतं यथा सम्प्रति । अत एव ऋषय इव कवयोपि छन्दोवत्कुर्वन्तो मन्यन्ते ।

यैः पुनः पाश्चात्याध्ययनपद्धत्या भारतीयान्ग्रन्थानधीयत आलोचन्ते च तेषां मते पाणिनेः पूर्वं नासीद् व्याकरणापेक्षा पदविन्यासे । बहवस्तु पाणिनेः पूर्वं व्याकरणमेव न सुव्यवस्थितमवर्ततेति मन्यन्ते । नैतत्तथा । पाणिनेः पूर्वमासन्व्याकरणानि । तानि चासंस्तथैव सुव्यवस्थितानि यथा पाणिनीयम् । यतः पाणिनिना स्वेषु सूत्रेषु बहूनां व्याकरणकर्तॄणामुल्लेखः कृतः । तेषां सुव्यवस्थितत्वे निदर्शनं तु शाकटायनमते सर्वेषां नाम्नामाख्यातजत्वम् । शाकटायनस्य व्याकरणस्य यास्ककृतान्निरुक्तादपि पूर्ववर्त्तित्वम् ( तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च " । नि० १।१२ "वैयाकरणानां शाकटायनश्च आह धातुजं नामेति " म० भा० ३।३।१ ) ।

यो व्याकरणकर्त्ता ( शाकटायनः ) सर्वाण्येव नामानि धातुभ्यः साधयितुं यतेत तेन पाणिनितोऽपि सुव्यवस्थिततरा नियमा न न विहिता भवेयुः ? । कियती विस्तृता तस्य व्याकरणस्य प्रक्रिया भवेत् ।

यत्र यत्र पाणिनिना पूर्वाचार्यनामोल्लिखितं तत्र प्रायेण विकल्पो वृत्तिकारादिभिर्मतः । परमेतदवधार्यं यन्न पाणिनेस्तेषामाचार्याणां च सर्वत्रैव नियमभेदः । बहुत्र पूर्वव्याकरणसत्तादर्शनार्थं तत्तदाचार्य-पूजार्थं च तेषां नामोल्लेखः । यथा "लोपः शाकल्यस्य" इत्यस्मिन् सूत्रेऽवर्णपूर्वयोः पदान्तयोर्यवयोर्लोप उक्तः । किं स लोपः शाकल्यस्यैव मतेऽस्ति ? । शाकल्यात्पूर्वं, पाणिनिमतेऽपि नासीत्कच्चित् । न । वेदेऽपि लोपविकल्पो दरीदृश्यते । तद्यथा "वायवायाहि-०" (ऋ०वे० १।२।१) अत्र न वलोपः । "वाय उक्थेभिः-०" (ऋ०१।२।२) अत्र वलोपः इत्यादि । न च पाणिनिनापि लोपो न मतः । तद्यथा-"एच इग्घ्रस्वादेशे" (१।१।४८) अच उपसर्गात्तः" (७।४।४७) इत्यादिषु वलोपः पाणिनेरत्र सूत्रेषु । "सावनडुहः" (७।१।८२) इत्यादौ न वलोपः । अतो निर्णीयते यच्छाकल्य-व्याकरणनिर्माणात्पूर्वं वेदेऽप्यस्य नियमस्यासीद्विकल्पः । शाकल्यादर्वाक् पाणिनिरपि लोपप्रयोगमेवाकरोत् । ततश्च पाणिनिस्तस्याचार्यस्य नामोल्लेखं केवलं प्रतिष्ठार्थमेव कृतवान् । अन्यथा "लोपो वा" इत्येव सूत्रितं स्यात् । यत्पुनः "शाकल्यग्रहणं विभाषार्थम्" इति वृत्ति-कृता तत्रोक्तं तन्न समीचीनं भाति ॥ उपनिषदादिषु बहवः पद-प्रयोगाश्छन्दोवद्दृश्यन्ते । तस्य कारणन्तूपर्युक्तम् । छन्दसि च सर्वे विध-

न कदापि परिजनोत्सारणाऽभवत् निभृतमन्त्रणेन भवितव्यम् । राज्ञीभी रहोविहारं तु कदापि न करोति महाराजः । किं ममैतेन विचारितेन । यथानियोगं करोमि ।

---

यो वहुलं भवन्ति । यथा च भगवान् पतञ्जलिर्व्याकरणमहाभाष्ये । ( व्यत्ययः । .. ....ततो बहुलम् । छन्दसि विषये सर्वे विधयो भवन्ति ) अपवादमुपेक्ष्योत्सर्गस्यापि प्रयोग इत्याद्यपि दृश्यते । किन्त्वेतन्न विस्मर्तव्यं यद्यद्विहितं तदेव विकल्पेन भवति नतु यस्य ( छन्दस्यदृष्टत्वात् ) नास्ति विधिस्तदपि । अतः प्राचीनानां कवीनां ग्रन्थेषु च्छन्दोवत्प्रयोगदर्शनात् छन्दसि सर्वेषामेव विधीनां विकल्पेन भावात्—महाराज इत्यत्र न समासान्तष्टच्—विहितः ।

यद्वाऽस्मिन् ग्रन्थे ग्रन्थस्य कर्त्रा स एव समयो दर्शितो यदा पाणिनिसूत्राणि तु निर्मितान्यासन् किन्तु नासन्वार्त्तिकानि न चासीन्महाभाष्यं निर्मितम् । ततष्टज्विधायिनः सूत्रस्य " न पूजनात् " ( पा० ५।४।६९ ) इति निषेधस्त्वनुसृतः । किन्तु "पूजायां स्वतिग्रहणम् " इति वार्तिकं नानुसृतम् । एतदेव दर्शयितुमग्रे सूत्रसङ्ग्रहावेवाभिहितौ व्याकरणे न तु वार्तिकानि वृत्तिर्न्यासो वा । अतोऽवाररुचमेतद्वरं भवेन्नापाणिनीयम् ।

राज्ञां कर्म निगूढभावमखिलं किं ज्ञायते मादृशै-
र्मन्त्रा मन्त्रिभिरेव कैश्चिदथवा बोद्धुं क्वचित्पार्यते।
सर्वत्रैव सदैव शंकितधियस्ते गोपयन्त्यात्मनः
कृत्यं जाग्रत एव मीलितदृशः संशेरते+ शेरते ॥१॥

( ततः प्रविशन्ति चेटयः )

एका चेटी—अज्ज चउणहं कुमाराणं पसत्तीए अज्ज एत्थ अम्हे सव्वाओ संभविअ चत-*सिओ कुसुमजवणिआओ असुत्ता रचेम्ह ।

[ आर्य चतुर्णां कुमाराणां प्रसत्त्यै अद्यात्र वयं सर्वाः संभूय चतस्रः कुसुमजवनिका असूत्रा रचयामः । ]

कञ्चुकीयः—अयि भवत्यः अन्यस्मिन्नुद्याने स्वाभिलाषं पूरयन्तु ।

अपरा चेटी—अज्ज अण्णसिं उज्जाणे ण एतारिसाइं× नानावण्णपरिमलाइं बहूणि कुसुमाइं ।

---

+ नक्तं च ते 'ख' * चत्तारो 'ख' × दिसाइं 'ख'

[ आर्य अन्यस्मिन्नुद्याने नैतादृशानि नानावर्णपरिमलानि बहूनि कुसुमानि । ]

कञ्चुकीयः—किन्त्वत्राद्य केनापि नागन्तव्यमिति राजनियोगः ।

अन्या चेटी—कथं राअणिओओ ता गच्छम्ह ।

[ कथं राजनियोगस्तर्हि गच्छामः । ]

( इति निष्क्रान्ताश्चेटच्यः )

कञ्चुकीयः—कृतं मया निर्मक्षिकमुद्यानं । तद्गत्वा महाराजानं(2) निवेदयामि ।

( इति निष्क्रान्तः )

॥ विष्कम्भकः ॥

( ततः प्रविशति परिजनेनोपास्यमानो महाराजः )

राजा—( स्वैरं परिक्रामन् )

इष्टं मया विरजसार्षविधिप्रदिष्टम् ।
दत्तं धनं बहु कृतं कुशलं प्रजानाम् ।

---

(2) See Note 1 Act I[1].

युद्धेषु नैव रिपवः स्थितिमाप्नुवन्मे ।
किं द्वेपयिष्यति जरा तु मनागीदानीम् ॥२॥

अपि च

दृष्टं प्रजासुखमनुत्तममात्मदृग्भ्यां
प्राप्ते च कीर्तियशसी[3] स्वकुलानुरूपे ।
भुक्ताः स्वकर्म न विहाय भुवीह भोगाः ।
यच्छिष्यते तदहमद्य जवेन कुर्याम् ॥३॥

( विचिन्त्य )

कृत्वा राज्ञीरव्यलीकास्तिस्रोऽप्यादरदर्शनैः ।
यौवराज्येऽभिषेक्ष्यामि रामं राजगुणान्वितम् ॥४॥

---

( ३ ) अमरादिभिः कीर्त्तियशसोरर्थाभेद उक्तः । तद्यथा "यशः कीर्त्तिः समज्ञा च" ( अ० को० १।६।११ ) किन्तु कीर्त्तिरन्या यशश्चान्यत् । तथा च साहित्यदर्पणटीकायां श्रीरामचरणतर्कवागीशभट्टाचार्यः "खड्गादिप्रभवा कीर्त्तिर्विद्यादिप्रभवं यशः" इति केषांचिन्मते तु—'शौर्यादिना प्रसिद्धिर्यशः । त्यागतपआदिना प्रसिद्धिः कीर्त्तिः' अतः कीर्त्तियशसीति नासङ्गतम् ।

कः कोत्र भोः ।

( प्रविश्य )

प्रतीहारी—जेदु महाराओ । को णिओओ महाराअस्स ।

[ जयतु महाराजः । को नियोगो महाराजस्य । ]

राजा—विजये अमात्यसुमन्त्र आहूयताम् ।

राजा—तह । [ तथा । ]

( निष्क्रम्य अमात्येन सह पुनः प्रविश्य )

एदु एदु अज्जो एसो महाराओ ता उपसप्पदु अज्जा

[ एत्वेत्वार्यः एष महाराजस्तदुपसर्पत्वार्यः । ]

सुमन्त्रः ( उपसृत्य )—जयतु महाराजः ।

राजा—अमात्य स्वागतम् । आस्यताम् ।

( राजा सुमन्त्रश्चोपविशतः )

राजा—विजये त्वं स्वस्थाने तिष्ठ× ( परिजनं प्रति ) भवत्योऽपि विश्राम्यन्तु ।

× स्वनियोगमशून्यं कुरु 'ख'

सर्वाः—तह । [ तथा ] ( इति निष्क्रान्ताः )

राजा—अमात्य चिन्ताजागरणपरवशं संप्रति मे चेतः ।

सुमन्त्रः—( स्वगतम् )

यस्य राज्ञो यशोऽभूरि परेषां च यतो भयम् ।
प्रजा यस्य प्रजाः स्वाश्च सोऽपि चिन्ताज्वरान्वितः ५

( प्रकाशम् )

महाराज

धर्मे दृढाः प्रकृतयो न भयं परेभ्यो
नैवेतयो(4) न च गदो न गृहे विषादः ।
पुत्राः प्रजासु दधते प्रणयं विनीता
श्चिन्ता कुतोऽद्य भवतो मनसि प्रभूता ॥६॥

अथ च

संस्कृतान्विनयोपेतान्प्रजारञ्जनतत्परान् ।

(4) See note 8 act I.

तनयांश्चतुरो वीक्ष्य चिन्तेयं त्यज्यतां लघु[5] ॥७॥

अथवा

एकं कुटुम्बं गृहमेधिनस्तु ।
करोति चिन्तां महतीं सदैव ।
राज्यं महद्यस्य कुटुंबभूतम् ।
कथं विचिन्तः स भवेन्नरेशः ॥ ८ ॥

महाराज चिन्ताप्रतीकारः कोऽपि चिन्तितः ।

राजा—अत एव तु भवनाहूतः ।

सुमन्त्रः—आज्ञापयतु महाराजः ।

राजा—कैकेयीतनयो राज्यं भोक्ष्यते सकलं मम ।
इमां प्रतिज्ञां कैकेय्यै पुराऽकार्षं त्वरान्वितः ॥९॥

सुमन्त्रः—हं ततस्ततः ।

राजा—राज्यपालनयोग्यं हि रामं क्षत्रगुणाकरम् ।
इच्छाम्यहं यौवराज्येऽभिषिक्तं सुकरं न तत् ॥१०॥

---

(5) लघु शीघ्रम् । लघुः=न गुर्वी । उभयमपि पुस्तकयोरस्ति ।

सुमन्त्रः—नापि तद्दुष्करम् ।

राजा—कथमिव ।

सुमन्त्रः—

जनन्यस्तिस्रस्तं नयविनयपूर्णं+ नरवरम् ।
सुतं स्वं मन्यन्ते प्रणयविहिताश्चास्य(6) सहजाः ॥
गुणास्तेजो ज्यैष्ठ्यं प्रकृतिहृदयं सर्वमपि त-
न्न रामं स्वीकुर्युर्न तदलघु चिन्ताऽस्त्यनुचिता ॥११॥

किं तु संप्रत्येवोपनिताः कुमारा ईषत्पूर्णशस्त्र-शास्त्राध्ययनाः किमनया चिन्तयेदानीम् ।

राजा—अनागतं भावि च विप्रकृष्टम् ।
यश्चिन्तयेत्तस्य भवेन्न कष्टम् ॥
प्राप्ते विषादे तु कृतं स्मरेद्यः ।
सुखं न तस्यास्ति नरस्य नूनम् ॥१२॥

---

+ मनुजगुण 'ख' । (6) विहिताः=विधेया इत्यर्थः । "विधेयो वचनग्राही वचने स्थित आश्रवः" इत्यमरः ।

अतोऽहमनुपस्थितमपि निवादहेतुं पुत्रराज्याभिषेकं चिन्तयामि येन काले कृतोपायो भवेयम् ।

×प्राक्चिन्तितेनोपायेन भावि कष्टं निवर्तते ।
कष्टे प्राप्ते चिन्तनेन दुःखं तु द्विगुणं भवेत् ॥१३॥

सुमन्त्रः—मयात्र किं कर्तव्यम् ।

राजा—राज्यः प्रजाः परिजनः सचिवाश्च भृत्या ।
रामानुरक्तमनसो निभृतं विधेयाः ॥
भ्रातर्यतीव भरतस्य तथैव भक्ति- ।
मुत्पाद्य कार्यमथ मे हृदयं विशल्यम्॥१४॥

सुमन्त्रः—( आत्मगतम् ) अहो दूरदर्शिता राज्ञः ।

( प्रकाशम् )

सर्वमेतद्दूरीवर्ति यदुक्तं भवताधुना ।
यतिष्येऽहं तथाप्यत्र तदनूनं यथा भवेत् ॥१५॥

---

× इदं पद्यं ख पुस्तके नास्ति ।

( अग्रतोऽवलोक्य )

महाराज तिस्र एव राज्ञ्यः सपरिजना इत आगच्छन्ति ।

राजा—तद्गच्छतु भवान् । किन्तु यन्मयोक्तं तन्न विस्मर्तव्यम् ।

सुमन्त्रः—यथाज्ञापयति देवः । ( निष्क्रान्तः )

राजा—सपरिजनास्तिस्रो राज्ञ्य इत एवागच्छन्ति । उक्तमासीन्मया अद्यास्मिन्ग्रीष्मोद्याने सर्वाभिर्भवतीभिरागन्तव्यमिति ।

( निरूप्य ) अग्रतः कौशल्या

धृतमणिरमणीया ज्येष्ठतावासमाना ।
बहुकुसुमलताभा विस्मृतान्यार्हणेयम् ॥
कथमपि गुरुदेहं चालयन्ती सगर्वा ×।
हृदयमपि ममान्तर्मानयुक्तं करोति ॥१६॥

---

× श्रमेण 'ख'

ततः सुमित्रा—

व्रतनियमकृशाङ्गी वीतरामाभिमाना ।
विशदवदनभासा द्योतयन्त्यन्यदेहान् ॥
नियतनिमिषनेत्रा नोच्चकैरालपन्ती ।
धृतसुखदशरीरा शान्तिरेषेति मन्ये ॥१७॥

तया सहैव कैकेयी—या हि

कमलविपिनमध्ये सूर्यबिम्बानुकारा ।
मम (7)वचनमिहानुस्मारयन्तीह पूर्वम् ।
गणयति न सपत्न्यौ सन्निधावप्यजस्रं ।
मृगपतिगतिरेषा भावयेत्सर्वलोकम् ॥१८॥

अत्र हि

कौशल्या महिषी ज्येष्ठा रामस्य जननी शुभा।
सगर्वा सा भवेत्कामं किन्तु मान्यैव सर्वदा ॥१९॥

सुमित्रा च

---

(7) See note 14 act I.

सर्वमित्रा सुमित्रेयमरोषा मानवर्जिता ।
मम कामानुसारिण्या मनो मे जितमेनया ॥२०॥

ततः कैकेयी

न जाने केन कार्येण रुष्टा भवति वा कदा ।
विक्रमार्जितसम्माना ररक्ष मम जीवनम् ॥२१॥

किन्तु

रोषमानौ न गण्येतां शौर्यप्रणयशालिनी ।
छन्दानुवृत्त्या संमान्या शीघ्रं चेयं प्रसीदति ॥२२॥

( ततः प्रविशन्ति तिस्रो राज्ञ्यः सपरिजनाः )

सर्वाः—जेदु महाराओ । [ जयतु महाराजः । (8) ]

---

(8) यद्यपि प्रायेण सर्वत्रैव पत्युः सम्बोधनम् 'आर्यपुत्र' इत्येव नाटकादिषु दृश्यते । तदेव चालङ्कारिकैरनुमतम् । तथापि स नियमो भगवता भरतेन यौवन एव मतः । राजा दशरथश्च प्रकृतकथाकाले नासीद्युवेति रामायणादिभिरवगम्यत एव । कैकेयीं विहायान्या राज्ञ्योपि तदा नासन्युवतयः अत एव तयाऽग्रे—'आर्य पुत्र' इत्येवोक्तम् । तथा च भरतः—"सर्वस्त्रीभिः पतिर्वाच्य आर्य पुत्रेति यौवने" (१९।२९)

राजा—स्वागतं देवीभ्यः× । इह मणिखचित-
शिलातल उपविशन्तु भवत्यः ।

( सर्वा उपविशन्ति )

राजा—विश्राम्यतु स्वगृहे भवतीनां परिजनः ।

परिजनः—( स्मित्वा ) जेदु महाराओ ।

[ जयतु महाराजः । ] ( इति निष्क्रान्तः )

राजा—अहो ग्रीष्मे मध्याह्नेऽपि शीतलतोद्यान-
स्य । पश्यन्तु तावद्भवत्यः ।

वृक्षच्छायानिषण्णा(9) भवनमृगगणो निद्रया
मीलिताक्षः ।

वापीष्वेते मराला स्तिमितजलवशात्कृत्रिमत्वं
भजन्ते ॥

शाखारूढास्तरूणां विजहति सहजं चापलं च
प्लवंगाः ।

ग्रीष्मोद्यानेऽत्र दूरागतखगशरणं वर्तते शीत-
लत्वात् ॥२३॥

---

× देवीनाम् ' स्व '(9) वृक्षाणां छाया वृक्षच्छायम् । " छाया बाहुल्ये" (पा०२।४।२२.) इति क्लीबत्वम् । तत्र—आ समन्तान्निषण्णः ।

कौशल्या—दिट्ठिविलोहि सुखावहं अ इदं उज्जाणं । जधा दाणिं मह सुखं करेदि ण तह पुव्वं ।

[ दृष्टिविलोभि सुखावहं चेदमुद्यानम् । यथेदानीं मम सुखं करोति न तथा पूर्वम् । ]

राजा—सर्वमेव काले सुखदं दुःखदं च भवति ।

शीताम्भसा दिवा स्नानं निदाघे सुखदं भवेत् ।
शिशिरे न सुखं तस्मात्काले सर्वं सुखावहम् ॥ २४ ॥

कैकेयी—अज्जउत्त किं करिदुं अअं कालो भवदो अहिमदो । [ आर्यपुत्र किं कर्तुमयं कालो भवतोऽभिमतः ]

कौशल्या—( स्वगतम् ) उववण्णं सासणं विअ एदाए वअणं । [ उपपन्नं शासनमिवास्या वचनम् ]

राजा—उद्यानस्यास्य रमणीयतां द्रष्टुं भवत्योऽत्र मयाऽऽहूताः । वृक्षच्छायशीतलेऽत्रोपविश्य विश्रम्भालापं करिष्यामः ॥

मन्त्री:—आणवेदु महाराओ [ आज्ञापयतु महाराजः । ]

राजा—उपनीताः सर्वे कुमाराः । संप्रति पञ्च-
दशहायनाः ।

कैकेयी—तदो किं । [ ततः किम् । ]

राजा—सर्व एव गुणाश्रया वीराश्च ।

कौशल्या—( स्वगतम् )

रामो ज्जेव सव्वगुणाअरो रज्जजोग्गो अ ।
[ राम एव सर्वगुणाकरो राज्ययोग्यश्च । ]

कैकेयी—ण हिरिअंदि कुलं पिअरे अ ।
[ न ह्रेपयन्ति कुलं पितरौ च । ]

राजा—सत्यम् ।

या दीपयेत्पितृकुलं स्वगुणक्रियाभि- ।
रात्मानमुत्तममनिन्द्यमथाऽपि कुर्यात् ॥
पुत्रः स एव पितरौ नयति स्वरित्थम् ।
भारायमाणवपुषा× विगुणास्तताऽन्ये ॥२४॥

---

× जीवन्ति चात्र बहवो 'ख'

किन्तु नैकस्मिन्नपि सर्वासां वोऽल्पः प्रणयः ।

*कौशल्या ( स्वगतम् ) मह पुणो रामे ज्जेव गरूओ पणओ ।

[ मम पुना राम एव गुरुः प्रणयः । ]

सुमित्रा—जम्मक्कमाणुसारं ज्जेव मह तेसुं पणअतारतम्मं ।

[ जन्मक्रमानुसारेण एव मम तेषु प्रणयतारतम्यम् । ]

कैकेयी—मह तु गुणाधिए अधिओ पणओ ।

[ मम तु गुणाधिकेऽधिकः प्रणयः । ]

राजा—कश्च गुणाधिकः ।

कौशल्या ( स्वगतम् )—रामो ज्जेव । [ राम एव । ]

कैकेयी—अवसरे कहिस्सं । [ अवसरे कथयिष्यामि । ]

राजा—सर्वे मम दायमर्हन्ति ।

सुमित्रा—दाअवत्थुसुं जं सिरिट्ठं तं जेट्ठस्स त्ति । मणू । [ दायवस्तुषु यच्छ्रेष्ठं तज्ज्येष्ठस्येति मनुः । ]

---

* इतः 'राजा—सर्वे मम दायमर्हन्ति' पर्यन्तः पाठो नास्ति 'ख' पुस्तके ।

कौशल्या—( सहर्षमात्मगतम् )

महाराअस्स दाअवत्थुसुं राज्जं सिरिट्ठं ।

[ महाराजस्य दायवस्तुषु राज्यं श्रेष्ठम् ।]

राजा—सर्वत्राचारे मनोः प्रामाण्यम् । राज-धर्मे तु वाशिष्टं[10] प्रमाणतमम् ।

कैकेयी—किं एत्थ वासिट्ठं आह ।

[ किमत्र वाशिष्ठमाह ।]

कौशल्या—( स्वगतम् )

रामस्स ज्जेव राज्जम् ।

[ रामस्यैव राज्यम् ]

राजा—

दायः स्यात्समभाग एव तनयैर्ग्राह्यो धनादिः सन्त्वे-।

---

(10) दाये यच्छ्रेष्ठं तज्ज्येष्ठस्येति मनुः ( अ० ९ श्लो० ११२ ) किन्तु वाशिष्ठे धर्मशास्त्रे नैष नियमो भवेत् । वाशिष्ठस्य धर्मशास्त्रस्याद्यप्रचलितायां मनुस्मृतेः पूर्ववर्त्तित्वं प्रतीयत एव ( मनु० अ० श्लो० १८० ) ।

दाचार्यत्वनृपत्वयोस्तु गुणवानर्हैत्पदं सर्वदा ॥
सेनानीत्वमपीह शौर्यगुरुणा लभ्यं न पूर्वोद्भवैः ।
राज्यं योग्यसुतार्पितं भवतु तद्ब्रूते वसिष्ठो मुनिः २६

कैकेयी——जोग्गत्तणं हि पडिपुरिसं भिन्नं । एकस्स मदे को वि जोग्गो अण्णस्स मदे ण सो जोग्गो ।

[ योग्यत्वं हि प्रतिपुरुषं भिन्नम् । एकस्य मते कोऽपि योग्योऽन्यस्य मते न स योग्यः । ]

राजा——( स्वगतम् )

केनाऽपि व्याजेन स्वाभीष्टविरोधं दर्शयित्वा कार्यसिद्धिं करोमि ।

( प्रकाशम् )

×कुमाराश्चत्वार एव योग्याः । राज्यस्य चतुरो भागान्कृत्वैकैकं भागं कुमारेभ्यो दास्यामि ।

---

× 'ख' पुस्तके तु–' योग्याः कुमाराश्चत्वारः प्रजापालनकर्मणि ॥ राज्यस्य चतुरो भागान्कृत्वा तेभ्यः प्रदीयताम्' इति पद्यमत्र वर्तते ।

कौशल्या—( स्वगतम् ) सव्वं राज्जं रामस्स ज्जेव दीअदु ।

[ सर्वं राज्यं रामायैव दीयताम् । ]

कैकेयी—किं एदं पि वासिट्ठं मदं । जइ एव्वं ता अणत्तवअणत्तणहिंतो ण तं पमाणं । वरं अण्णो सम्माओ भवे ण पुणो सं-राज्जस्स भाआ ।

[ किमिदमपि वासिष्ठं मतम् । यद्येवं तर्हि अनाप्तवचनत्वान्न तत्प्रमाणम् । वरमन्यः सम्राट् भवेन्न पुनः साम्राज्यस्य भागाः । ]

राजा—तर्हि कस्मै राज्यं दीयताम् ।

कौशल्या—( स्वगतम् ) रामस्स । [ रामाय । ]

कैकेयी—जोग्गतमस्स । [ योग्यतमाय । ]

राजा—( स्वगतम् )

संप्रति सर्वमुद्घाटयामि ।

( प्रकाशं कैकेयीं प्रति )

स्मरति भवती भवत्या विवाहकाले

*विध्युपदिष्टादन्यदहं प्रतिज्ञास्यामि ।

कैकेयी—सुमिरेमि सव्वं ।

[स्मरामि सर्वम्]

राजा—तद्भरत एव राज्यदायमर्हति ।

कैकेयी—ण इत्थिआ पुत्तअस्स

राज्जलाहेण ण पसीदइ ।

[न स्त्री पुत्रस्य राज्यलाभेन न प्रसीदति ।]

कौशल्या—( स्वगतम् )

+वज्जपादसरिसं एदं वअणं ।

[वज्रपातसदृशमेतद्वचनम् ।] ( मूर्च्छति )

सुमित्रा—परित्ताअदु परित्ताअदु महाराओ ।

कोसल्ला मुम्मइ ।

[परित्रायतां परित्रायतां महाराजः । कौशल्या मूर्च्छति ।]

( राजा प्रावारकेण वीजयति कैकेयी पुष्करिण्या जलमानीय मुखे सिञ्चति सुमित्रा हस्तपादतलमर्दनं करोति )

सुमित्रा—समस्ससिदु महादेवी ।

× विध्युपदिष्टादन्यदिति पाठो नास्ति 'ख' पुस्तके ।

+ वज्जसदिसं 'ख'

[ समास्वसितु महादेवी । ]

( कौशल्या संज्ञां लभते । )

राजा--कथं मूर्च्छाभिभूता देवी ।

कौशल्या—मज्झण्णे एत्थ आअदा । आदवो अ मं बाधेदि ।

[ मध्याह्नेऽत्रागता । आतपश्च मां बाधते । ]

कैकेयी ( स्वगतम् ) अवदेट्ठुं पि ण जाणादि देवी ।

[ अपदेष्टुमपि न जानाति देवी । ]

राजा—( स्वगतम् ) जानामि देव्या दुःखं कौशलं च।

सुमित्रा--महाराअ विवाहकाले पडिण्णादं अज्जउत्तेण तदो भरतो राआ भवे । ज्जेट्ठत्तणादो रामो रज्जं अरिहदि ता अद्धं अद्धं रज्जं दुवेणं दीअदु ।

[ महाराज विवाहकाले प्रतिज्ञातमार्यपुत्रेण ततो भरतो राजा भवेज्ज्येष्ठत्वाद्रामो राज्यमर्हति तदर्धमर्धं राज्यं द्वाभ्यां दातव्यम् । ]

राजा—तव पुत्राभ्यां किं देयम् ।

सुमित्रा—ण किं पि । [ न किमपि । ]

( संस्कृतमाश्रित्य )

रामं +राज्यपदे स्थितं प्रियगुणो मे लक्ष्मणः[11] सेविता
शत्रुघ्नो भरतं ततः सुखममू पूर्णं सदा प्राप्स्यतः ॥
राज्ये शत्रुभयं प्रजानियमनं तस्माच्च तद्भारवत् ।
धत्ते क्लेशमजस्रमेव मनसः शान्तिस्तु सेवाफलम् ।२७

राजा कैकेयी च ( संस्कृतमाश्रित्य)

अहो त्यागो महान्देव्याः संन्तोषोऽ लोभश्च।

कौशल्या–(स्वगतम्) असंतोसो शे ण जाणे किं करोदि

[असंतोषोऽस्या न जाने किं करोति]

( प्रकाशम् )

महाणुभावा मे भगिणी ।

[महानुभावा मे भगिनी]

राजा—मातृगुणाः पुत्रं संक्रामन्ते ।

अत एव भ्रातृस्नेहादर्शभूतावस्याः पुत्रौ ।

धन्येयम् ।

---

(11) अत्र मयेत्यर्थे 'मे' इति। मया सह लक्ष्मणो रामं सेवितेत्यर्थः।

+ लब्धपदं नृपं (ख)

सुमित्रा—लद्धं मए जं लद्धव्वं ।

[लब्धं मया यल्लब्धव्यम् ।]

( संस्कृतमाश्रित्य )

न मानिनी न व्यवहारजेत्री(12)

नवाक्पटुर्नापि कलिं विधात्री ॥

धन्या भवेद्योषिदवाप्य साधु-

वादं सपत्न्याश्च तथैव पत्युः ॥ २८ ॥

राजा—संप्रति राज्ययोग्यः कतरः ।

कैकेयी—जइ मह वाआ+ समाणा ता रामो ज्जेव राज्जं अरिहदि ।

[यदि मम वाक्समाना तर्हि राम एव राज्यमर्हति]

कौशल्या—(सहर्षम्) पिअं मे पिअं । [प्रियं मे प्रियम् ।]

सुमित्रा—

मह चित्तम्मि जं आसी । तं जेव केकईए भणिदं ।

[मम चेतसि यदासीत्तदेव कैकेय्या भणितम्]

---

(12) ताच्छील्ये 'तृन्' । ङवम् ।

+ वअण माणी आदि (ख)

राजा–विवाहकाले यन्मया प्रतिज्ञातं तस्य का गतिः।

कैकेयी—सोहणा गई । (शोभना गतिः।]

राजा—प्रतिज्ञाहानिः पातकमिति सतां संप्रदायः।

कैकेयी—भवादिसस्स राएसिणो पडिण्णाहनीए महांतो अणत्थो ।

[भवादृशस्य राजर्षेः प्रतिज्ञाहानौ महाननर्थः।]

(संस्कृतमाश्रित्य)

प्रतिज्ञा नोपेक्ष्या यदि निजसुखादि क्षिपति सा
सतां मार्गस्त्वेवं न खलु भवता स्यान्न स मतः।

कौशल्या। अहो वज्जपादो ।

[अहो वज्रपातः।]

राजा—युक्तमेव ।

कैकेयी—(संस्कृतमाश्रित्य)

प्रतिज्ञातं किञ्चिद्धरति जनतासौख्यमथ चे-
न्न हि त्यक्ते तस्मिन्नविहितलवोऽप्यस्ति(13)
भगवन् ॥२९॥

(13) अविहितलवः । पापलेशः ।

रामो गुणानां निकषो वरीया-
न्नृपासनार्हः शतमन्युकल्पः ।
संरक्षणायैव भुवो विधात्रा
विनिर्मितो विष्णुरिव प्रतापी ॥३०॥

अवरं अ कज्जे विआरिदव्वे कारणपज्झाण-तणं ण उवेक्खिदव्वं । मं पसादिदुं ज्जेव महारण्णा मह पुत्तअस्स राअदाओ पडिण्णादो । अहं रामस्स राज्जदाणेण पसण्णा । भरतस्स राज्जदाणेण जं भोदि तं रामस्स राज्जदाणेण वि भोदि ।

[ अपरं च कार्ये विचार्यमाणे कारणप्रधानत्वं नोपेक्षितव्यम् । मां प्रसादयितुमेव महाराज्ञा मम पुत्रस्य राज्यदायः प्रतिज्ञातः । अहं रामाय राज्यदानेन प्रसन्ना । भरताय राज्यदानेन यद्भवति तद्रामाय राज्यदानेनापि भवति । ]

राजा—भरतोऽपि गुणवान्राज्यार्हश्च ।

कैकेयी—बाढं । [बाढम् ।]

(संस्कृतमाश्रित्य)

गुणी गुणी स्यादगुणेषु सत्सु+
तस्यागुणित्वं गुणवत्तरे तु ।
दीपप्रकाशो निशि भास्वरो हि
सूर्ये तपत्यस्य कुतोऽस्तु तेजः ॥३१॥

भरतस्य गुणाः के स्यू रामे तु गुणवत्तरे ।
सर्वलक्षणसंपन्नो राज्यार्हो राम एव तत् ॥३२॥

कौशल्या—पिअं मे पिअं ।

[प्रियं मे प्रियम् ।]

सुमित्रा—अहो भगिणी मे केकई महाणु-
भावा नीतिण्णा अ ।

[अहो भगिनी मे कैकेयी महानुभावा नीतिज्ञा च ।]

राजा—अन्यदा गर्जतो मेघादद्यामृतवृष्टिरभवत् ।

कैकेयी—अज्जउत्त पणए वि अहं णिव्वाजं

---

+ नूनं 'स' ।

सच्चं कहेमि । त्तं ज्जेव मे घणगज्जणं । ण
अ अजुत्तं कहेमि । साज्जेव अमिअविट्ठी
किं तु

[ आर्यपुत्र प्रणयेऽप्यहं निर्व्याजं सत्यं कथयामि । तदेव मे घनगर्जनम् । न चायुक्तं कथयामि सैवामृतवृष्टिः । किन्तु ]

( संस्कृतमाश्रित्य )

पीयूषवर्षी जलदः स्वभावादेव वर्तते ।
स एवाशनिमप्यस्येन्निरुद्धे तस्य वर्त्मनि ॥३३॥

राजा—( स्वगतम् )

अनेन वचसाऽन्यस्य भीतिः स्यात्किन्तु एषा देवी शीघ्रमेव क्रुध्यति तुष्यति च तस्मान्न मे काऽपि शङ्का ।

( प्रकाशम् )

प्राप्ते काले तु भविता नृपः कोऽपि ममात्मजः
करिष्यति नियत्येव[14] सर्वं सर्वसुखावहम् ॥३४॥

---

(14) नियती । क्तिजन्तत्वात् " कृदिकारादक्तिनः " ( वा० पा० ४।१।८५ ) इति ङीष् ।

कैकेयी—अज्जउत्त जं अज्ज णिच्चिदं तं ज्जेव भविस्सदि । अहवा णूणं तं ज्जेव करिस्सम्म ।

[ आर्यपुत्र यदद्य निश्चितं तदेव भविष्यति । अथवा नूनं तदेव करिष्यामः । ]

कौशल्या—महाराअ साअण्णे कीलिदुं गच्छन्ता कुमारआ रामं पुरोकदुअ जेट्ठा त्ति मं वंदिदुं आअच्छन्दि तदो ताओ संभावइदुं गच्छामि ।

[ महाराज सायाह्ने क्रीडितुं गच्छन्तः कुमारा रामं पुरस्कृत्य ज्येष्ठेति मां वन्दितुमागच्छन्ति तत्तान्संभावयितुं गच्छामि । ]

सुमित्रा—कुमारआ सव्वे ज्जेव सव्वाओ ज्जेव माए वंदिदुं साअण्णे गच्छंति ण दाणं मणए जेट्ठकणिट्ठत्तणभेदो ।

[ कुमाराः सर्वे सर्वा एव मातृर्वन्दितुं सायाह्ने गच्छन्ति न तेषां मनसि ज्येष्ठकनिष्ठत्वभेदः । ]

कैकेयी—अहं पि गच्छिदुं इच्छामि ।

[ अहमपि गन्तुमिच्छामि । ]

राजा—तेन हि गच्छन्तु भवत्यः ।

[ सर्वा राजानं प्रणम्य गच्छन्ति । ]

राजा—एकैकैषां गुणैः स्वैः सुखयति हृदयं
वार्द्धकेणाकुलं मे ।
भिन्ना लोके रुचिश्च प्रतिपुरुषमिदं किन्तु नै-
तासु नो तत् ।
ज्येष्ठा ज्येष्ठाभिमाना सततमसहना प्राज्यकोपा
कनिष्ठा ।
वैमत्येनैनयोः किं क्व च भवतु गृहे दुःखमेष
ज्वरो मे ॥३५॥

परिग्रहबहुत्वं तन्नराणां न सुखावहम् ।
तदत्यन्तं मनोरोगं कुरुते प्रणये समे ॥३६॥

कः कोऽत्र भोः

( प्रविश्य )

प्रतीहारी—जेदु महाराओ । को णिओओ म-
हाराअस्स ।

[ जयतु महाराजः । को नियोगो महाराजस्य । ]

राजा—विजये सुमन्त्र आहूयताम् ।

प्रतीहारी—तह । [ तथा ]

( निष्क्रम्य पुनः सुमन्त्रेण सह प्रविश्य )

एदु एदु अज्जो । एसो महाराओ उपसप्पदु अज्जो ।

( एत्वेत्वार्यः । एष महाराज उपसर्पत्वार्यः )

सुमन्त्रः—जयतु महाराजः ।

राजा—स्वागतममात्याय । उपविश्यताम् । विजये त्वं बहिर्गत्वा तिष्ठ ।

प्रतीहारी—जं आणवेदि महाराओ ।

[ यदाज्ञापयति महाराजः । ] ( निष्क्रान्ता )

सुमन्त्रः—को नियोगो महाराजस्य ।

राजा—अद्य मया कैकेय्या महानुभावत्वं ज्ञातम् । सुमित्रायाश्च निर्लोभत्वम् ।

सुमन्त्रः—कथमिव ।

राजा—मया विवाहकाले कैकेयीतनयाय मम राज्यं प्रतिज्ञातमासीत् । तया च “ गुणवत्तरो राज्यमर्हतीति रामाय तदुज्झितम् । सुमित्रा स्वतनयौ रामभरतयोः सेवापरौ द्रष्टुमिच्छति । अहो महानुभावे देव्यौ ।

सुमन्त्रः—

कर्तव्यंसदसच्च भाविसुखकृच्चिन्त्यं सदा सूरिभि-
र्न्याय्यं कार्यमनागतं स्मरति यस्तस्य क्वचिन्नासुखम्।
दैवायत्तमिदं जगन्न मनुजा दैवं निहन्तुं क्षमाः।
तच्चाप्यात्मकृतं पुरा भवति यत्तस्यास्ति लभ्यं
फलम् ॥३७॥

किन्तु

कुमाराः सर्वेऽपि+ प्रचुरगुणमान्याः कृतधियो-
मनश्चैकं मन्ये दधति च शरीराणि चतुरः ।

---

\+ चत्वारः ‘ ख ’

नृपत्वेप्सा चैषां प्रणयमकृतं किं विघटये-
ज्जले छिद्रं कर्तुं प्रभवति न सूची हि निशिता ॥३८॥

×राज्यप्रदानचिन्ता तु त्यक्तव्या भवता ततः ॥
रामस्य राज्ये राज्ञ्योऽपि सर्वाः प्रीतिं न यान्ति किम् ३९

राजा—अत एव विचिन्तोऽहमद्य ।

सुमन्त्रः—अन्यच्च भगवान्वशिष्ठो विज्ञापयति ।

राजा—किमाह भगवान् गुरुः ।

सुमन्त्रः—

पूर्वाधीतसदागमैरिव सकृच्छ्रुत्वैव विद्याः शुभाः ।
सर्वा एव कुशाग्रबुद्धिभिरभिप्राप्ताः कुमारैर्द्रुतम् ॥
शस्त्रास्त्रव्रजशिक्षणाय नियतः कोपि क्रियेताधुना
राज्यज्ञानकृतेऽथ शासनविधिश्चैषां पुरो
वर्त्यताम् ॥ ४० ॥

( सहसा प्रविश्य )

विदूषकः—भो वअस्स पडिहारीए रुद्धो वि ताए

× एतत्पद्यं नास्ति 'ख' पुस्तके

कलहं कदुअ झत्ति पिअं णिवेदेदुं आअदो म्हि।
[ भो वयस्य प्रतीहार्या रुद्धोऽपि तया कलहं कृत्वा झटिति प्रियं निवेदयितुमागतोऽस्मि । ]

राजा—किं तत्प्रियम् ।

विदूषकः—रामस्स राज्जाहिसेओ भविस्सदि त्ति देवीए कोसल्लाए मह मोदआ पडिस्सुदा । एसो वुत्तन्तो जाव तुह ण णिवेदिदो दाव मह पोट्टे भारो विअ आसि। संपदं पोट्टं लहु जादं।

[ रामस्य राज्याभिषेको भविष्यतीति देव्या कौशल्यया मम मोदकाः प्रतिश्रुताः । एष वृत्तान्तो यावत्तेन निवेदितस्तावन्ममोदरे भार इवासीत् सांप्रतमुदरं लघु जातम् । ]

राजा—प्रत्यहं मोदकान्भोक्ष्यसे। रामो वा भरतो वा यः कोऽपि राज्यं लभेत। न ते मोदका हीयन्ते। मा कुरु चिन्ताम् ।

विदूषकः—कीश चिंतं ण करेमि। जइ रामो राज्जं लभइ देवी कोसल्ला बहुणो मोदआणि मह दइस्सदि। जइ भरतो राआ भवे

केकई बहुदराआ मोदआणि दइस्सदि ।

[कथं चिन्तां न करोमि । यदि रामो राज्यं लभते देवी कौशल्या बहून्मोदकान्मह्यं दास्यति । यदि भरतो राजा भवेत् कैकेयी बहुतरान्मोदकान्दास्यति ।]

सुमन्त्रः—किं तर्हिं भगवते वशिष्ठाय निवेदयामि ।

विदूषकः—(जनान्तिकम्)

अमच्च अहं वअस्सं कोवइदुं किं पि कहेमि ण तुए परमत्थं तं मणीअदु ।

[अमात्य अहं वयस्यं कोपयितुं किमपि कथयामि न त्वया परमार्थं तन्मन्यताम्] (राजानं प्रति)

णिवेदीअदु वसिट्ठो जाव अहं मोदएहिं ण तुट्ठो दाव ण अहिसेहविही तुए पारद्धव्वो त्ति ।

[निवेद्यतां वशिष्ठो यावदहं मोदकैर्न तुष्ठस्तावन्नाभिषेकविधिस्त्वया प्रारब्धव्य इति ।]

राजा—निवेद्यतां स भगवान्गुरुः शीघ्रमेव भवदुक्तं करिष्य इति ।

विदूषकः—(अपवार्य) वअस्सस्स क्खोभं उप्पादेमि दाव मा अण्णधा जाणेसि ।

[वयस्यस्य क्षोभमुत्पादयामि तावन्माऽन्यथा जानीहि ।]

( प्रकाशम् )

तुम्हे किं मए अविण्णादं मन्तेध ण अ मां पुच्छध। अज्ज मए ण्णादं भरतस्स पडिस्सुदं राज्जं वअस्सो रामस्स दइस्सदि । अहं अन्तेउरे देवीणं वहिरे अ भादुणं विग्गहं उप्पादेमि। अहवा पाओववेसणभअं सव्वाणं उप्पादेमि ।

[युवां किं मयाऽविज्ञातं मन्त्रयथः न च मां पृच्छथः। अद्य मया ज्ञातं भरताय प्रतिश्रुतं राज्यं वयस्यो रामाय दास्यति। अहमन्तःपुरे देवीनां बहिश्च भ्रातृणां विग्रहमुत्पादयामि। अथवा प्रायोपवेशनभयं सर्वेषामुत्पादयामि]

राजा—अमात्य यन्मयोक्तं तद्भगवान्गुरुर्निवेद्यताम्।

सुमन्त्रः—यदाज्ञापयति महाराजः (निष्क्रान्तः)।

विदूषकः—गदो क्खु कवडपंडिदो ।

[गतः खलु कपटपण्डितः ।]

राजा—(स्वगतम्) चपलोऽयं वटुः कलहप्रियः। न च फलदर्शी। मूढोत्पादितोऽपि क्षोभः शंकां जनयति। भवतु एवं तावत्।

( प्रकाशम् )

सखे सुन्दरक कथाप्रसंगेनैवाद्य राज्यदायविचार उद्भूतः। न किमपि कस्यापि वचनं यथार्थं मन्यस्व।

क्व नृपत्वमनल्पविप्लवम् ।
क्व कुमाराः सुकुमारचेतसः ॥
परिहासविजल्पितं त्विदम् ।
परमार्थं न हि मन्यतां वचः[15] ॥४१॥

विदूषकः—णिच्चं ज्जेव एव्वं कहापसंगो भवे ।
[ नित्यमेवैवं कथाप्रसङ्गो भवेत् । ]

---

(15) अस्य श्लोकस्य तृतीयः पादः शाकुन्तलस्य द्वितोयाङ्कान्त्यश्लोकस्य तृतीयपाद एवाभाति । किन्त्वेतादृक् शब्दैक्यमर्थैक्यं च प्रायेण दृश्यत एवैकस्यान्यस्य च महाकवेर्ग्रन्थेषु । तद्यथा—

(क) " यावत्प्रतापनिधिराक्रमते न भानु-
रह्नाय तावदरुणेन तमो निरस्तम् ॥
आयोधनाग्रसरतां त्वयि वीर याते
किं वा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति ॥ "

रघुवंशे ( ५।७१ )

" व्रजति विषयमक्ष्णामंशुमाली न यावत्
तिमिरमखिलमस्तं तावदेवारुणेन ॥
परपरिभवितेजस्तन्वतामाशु कर्तुम् ।
प्रभवति हि विपक्षोच्छेदमग्रेसरोऽपि ॥
शिशुपालवधे ( ११।२५ ॥

(ख) " पत्तिः पदातिं रथिनं रथेशस्तुरंगसादी तुरगाधिरूढम् ॥ "
रघुवंशे ( ७।२ )

" पत्तिः पत्तिं वाजिमेयाय वाजी नागं नागः स्यन्दनस्थो रथस्थम् । "
शिशुपालवधे ( १८।२ )

(ग) " लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ॥
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ "

एतत्पद्यं बालचरित चारुदत्तमृच्छकटिकेष्वभिन्नशरीरमस्ति ।

(घ) " अग्निहोत्रं त्रयोवेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविका धातृनिर्मिता । "
" भस्मीभूतस्य देहस्य पुनरावर्तनं कुतः । "
( सर्वदर्शनसङ्ग्रहे सायणाचार्येणोद्धृतेषु बृहस्पतिश्लोकेषु )

" अग्निहोत्रं त्रयीतन्त्रं त्रिदण्डं भस्मपुण्ड्रकम् ।
प्रज्ञापौरुषनिःस्वानां जीवो जल्पति जीविका ॥ २९ ॥ "
" भस्मीभूतस्य भूतस्य पुनरावर्तनं कुतः ॥ "
( नैषधीयचरिते सप्तदशसर्गे ) इत्यादि ।

( नेपथ्ये )

जित्वा शक्रपुरीं विनाश्य+ विबुधान्संभर्त्स्य चान्या-
न्नृपान्
शान्ती रावणमानसेन विधृता सा भङ्गमाप्ताधुना।
श्रुत्वा राममर्त्यपौरुषममुं बाल्येऽप्यबाल्यौजसं
गूढः संचरतीह राक्षसपतिस्तद् ज्ञायतां किं भवेत्॥४२॥

राजा—अहो प्रधानचरस्य सुबुद्धे, स्वरसंयोगः।
सुन्दरक गच्छ त्वं ब्रूहि मद्वचनात्सुबुद्धिम्।
श्रुतं गृहीतं ते वच इति।

विदूषकः—ण गमिस्सं। कदावि रावणो मग्गे मं रामं जाणिअ खादेदि।
[ न गमिष्यामि कदापि रावणो मार्गे मां रामं ज्ञात्वा खादति ]

राजा—भवतु। अहमपि गच्छामि।

( स्वगतम् )

एका शङ्का निवृत्तासीद् द्वितीया समुपस्थिता॥
अपुत्रस्य तु दुःखं स्यात्पुत्रवत्ता हृदो गदः॥४३॥

---

+ प्रवास्य 'ख'।

ज्ञात्वा पुत्राञ्जातमात्रानपीत्थ-
मुत्तिष्ठन्ते वैरिणो दूरतोऽपि ।
पुत्राणां तच्छैशवं वृद्धता मे
वीर्योद्रिक्ताः शत्रवश्चेश्वरोऽव्यात् ॥४४॥

( इति निष्क्रान्तौ )

॥ इति द्वितीयोऽङ्कः ॥



## ॥ तृतीयोऽङ्कः ॥

( ततः प्रविशतः सरयूतीरे क्रीडन्तौ गन्धर्वौ )

चित्रकेतुः—चित्रपद[+], त्वं तावदिह जलावगाहनिहितमतिः स्वकर्तव्यमपि न स्मरसि। जानासि किं निमित्तमावामिहागतौ ।

चित्रपदः—चित्रकेतो जानामि सर्वम्। रावणो रामस्य किमप्यनिष्टमाचरितुं निगूढरूपच्छायोऽयोध्यायां प्रासादं निकषा भ्रमति। तस्माद्रामं रक्षितुं महेन्द्रादेशान्मनुष्यधर्मणाऽऽवां प्रेषितौ । किन्त्वत्र-

शैलाधिराजतुहिने न सुखं तथाऽभू- ।
न्मन्दाकिनी पयसि चापि सुराङ्गनाभिः ॥
स्नाने यथात्र सरयूसलिलेऽस्ति सौख्यम् ।
तस्मादहं न बहिरेमि चिरं सरय्वाः ॥१॥

चित्रकेतुः—हिमाधिकाद्देशादत्रागतावावाम् । अयं च निदाघकालः । ततो जलावगाहाः

---

+ ख पुस्तकेस्य नाम चित्रपाद इत्यस्ति ।

सुखयन्ति। किन्तु न स्वामिनियोगो विस्मर्तव्यः।

चित्रपदः—मैवम्—

सर्वर्त्तुरमणीयेयं देवर्षिमनुजस्तुता ॥
सरयूर्दुरितं हन्ति ग्रीष्मे च शिशिरे समम्॥२॥

अपरं च न मया स्वामिनियोगो विस्मृतः। अपराह्णात् पूर्वं कथं रावणोऽयोध्यामागन्तुं शक्नुयात्। पुष्पकेण विमानवरेणापि तावान्कालो लगति। अन्यच्च न महेन्द्रो न मनुष्यधर्मा न चान्ये देवासुराः(1) स्वदाररक्षणमपि* रावणात्कर्तुमीशाः। आवयोः का शक्ती राव-

---

* ख पुस्तकेऽपीति नास्ति।

(1) 'देवासुराः' इत्यत्र "येषां च विरोधः शाश्वतिकः" (पा० २।४।९) इत्येन नैकवत्त्वम्। देवाश्चासुराश्च न शाश्वतं विरोधं दधुः। यतस्तेषां पितैक एव। एतच्च स्पष्टीकृतं मल्लिनाथेन शिशुपालवध (१।३५) टीकायाम्। "सुरासुरविरोधस्य कार्योपाधिकत्वेनाशाश्वतिकत्वम्" इति।

णाद्रामं रक्षितुम् । तथापि स्वामिनियोगो नो-
पेक्षणीयः। गूढदेहौ तत्प्रासादोपवने निरीक्षावहे।

चित्रकेतुः—न न वक्तव्यं तथा । यदि नाम रावणो राज्ञो दशरथाद् बलवत्तरो भवेत्कथं निभृतमागच्छेत् । आवां तस्यानिष्टोपक्रमं ज्ञात्वा राज्ञे दशरथाय ज्ञापयिष्यामः ।

चित्रपदः—नैतद्यथा भवानाह। अद्वितीय एव बली रावणः । किन्तु

स्तेनाः शठा लम्पटाश्च बलवन्तोपि निर्भयाः ॥
नोत्सहन्ते पापकर्म प्रत्यक्षं कर्तुमत्ययात् ॥३॥

चित्रकेतुः—तथाप्यस्त्येव तावदनिष्टप्रतीकारोपायः।

चित्रपदः—तर्हि गच्छावः ।

( निष्क्रान्तौ ! )

( विष्कम्भः )

( ततः प्रविशत्याकाशमार्गेण रावणः )

रावणः—ऋषेः पुलस्त्यस्य कुलेस्मि जातः ।
लब्धं मयाऽऽराध्य शिवं बलं च ॥

विधाय देवान् विजितानदेवान् ।
भृत्यानजेयः(2) खलु रावणोऽहम् ॥४॥

कुलं बलं शौर्यमथाद्वितीयम् ।
दुर्गायमाणा नगरी समुद्रे ॥
यस्यास्ति तेनास्तु कथं भुवीह ।
वीर्यातिरेकस्तु परस्य सोढः ॥५॥

रामो नाम महीपतेर्दशरथस्यात्रात्मजः शस्त्रवि- ।
द्बाल्येप्येष बली सुरासुरगणाञ्जेतुं समर्थो भवेत् ॥
श्रुत्वैतत्त्वरतो भुवीह न भवेन्मत्तो बलीयान्नरो
भूत्वा चैव चिरं न जीवतु ततो ह्यत्रागतोऽहं द्रुतम् ॥६॥

---

(2) जेय इत्यनेनैव जेतुमशक्यो रावण इति—ज्ञापयितुमलम् । शक्यार्थे जय्य इति रूपं भवति (पा. ६।१।८१) जेतुमशक्यो-जेय इति स्यात् । अत्र रावण आत्मानं न केवलं जेतुमशक्यं किन्तु जेतुमयोग्यं च ब्रूते । तस्य मते न तेन किमप्यकार्यं कृतम् ।

लब्धा भवेत्कथमपीह विना सहायम् ।
रामो मया तमधुना स्वपुरं नयेयम् ॥
तत्रावगत्य कियदस्ति बलं च तस्य ।
बन्धं वधं यदुचितं विदधेऽथ मोक्षम् ॥७॥

मन्त्रप्रभावान्निगूढरूपं मे व्योमजलपर्वतादिषु तुल्यगतिं रथमिमं न कोऽपि द्रक्ष्यति । तदेनमत्र मुक्त्वा प्रासादाभ्यर्णं गत्वा पश्यामि निगूढदेहः ।

( निष्क्रान्तः )

( ततः प्रविशति विश्वामित्रः )

विश्वामित्रः—

क्षात्रं तेजो दधत् प्राक् क्वचिदपि न जितः
शस्त्रसङ्घातपातै- ।
र्ब्रह्मत्वेनास्ततेजा युधि पुनरभवं
ब्राह्मणोऽहं तपोभिः ॥
ब्राह्मं तेजोस्ति पूर्णं मम विबुधगणै-
रप्यनाप्तास्त्रविद्या ।

तस्मात्तुल्यो मया को भवतु हि भुवने
सर्वं शक्तिर्निरीहः× ॥८॥
लोके सम्प्रति मां विहाय न हि या-
जानाति कोपि क्वचित् ।
दुर्बोधाऽतिबला बलाथ विजया-
दिव्या जयास्ता इमाः ॥
विद्या(3)जृम्भकमस्त्रमत्र भुवि को-
गृह्णातु मत्तः कृती ।
चिन्तेत्थं मम मुक्तसम्प्रहरण-
स्यासीच्चिरान्मानसे ॥९॥

रामं सुतं दशरथस्य निशम्य वीरम् ।
बाल्येप्युदात्तगुणमुग्रबलं च दान्तम् ॥
अत्रागतोस्मि यदि सोस्ति यथा श्रुतो मे ।
नेष्यामि तं स भविता मम हेतिशिष्यः ॥१०॥

---

× सर्वं कर्त्तुं समर्थो भवतु हि भुवने मत्परो वीतरागः 'ख'

(3) बलातिबले विद्ये (रामा० १।२२।१७)
जयाविजये विद्ये (भट्टि काव्ये २।२१)

यथाकथंचिन्नृपतिर्वृद्धो दशरथो मया ॥
याचितव्यस्ततो रामं नेष्यामि +निजमाश्रमम् ॥११॥

( अग्रतोऽवलोक्य ) अहो कथं रावणोऽत्राकाशवर्त्मना भुवमवतीर्णः । पश्यत एव मेऽनेन तिरस्करिण्या निगूढः स्वरथः । सम्प्रति स्वयमपि न दृश्यते । भवतु । अहं तिरस्करिणीपिहितमपि पश्यामि । निगूढदेहः पश्यामि किमिहायमनिष्टं करोति । नास्मिन्नागतेऽनिष्टं न भवति ।

( प्रविश्य )

रावणः—अये—कथं विश्वामित्रोऽप्यत्र । अयं हि ब्रह्मक्षत्रतेजसो राशिः । ममाभीष्टमसौ नूनं विहनिष्यति । यद्यप्ययं दुर्धर्षस्तथापि न मे रावणस्यानिष्टं कर्तुं शक्नोति । अयमपि निगूढश्चरति । अहं निगूढरूपमप्येनं द्रष्टुं शक्नोमि ।

---

+ प्रत्याख्यानं न वेद सः ' ख '

विश्वामित्ररावणौ—दिष्ट्या नानेन दुरात्मनाऽहं
दृष्टः । (अग्रेऽवलोक्य) अत्रैवागच्छन्ति कुमारा
वशिष्ठेन सह ।

(ततः प्रविशति वशिष्ठश्चतुर्भिः कुमारैः सह)

वशिष्ठः—दीर्घायुषः कुमाराः ।

अध्यापिता मया यूयं सर्वा विद्या यथाविधि ॥
युष्माभिः श्रुतमात्रास्ता हृदयस्था कृता द्रुतम् ॥१२॥
ततः कृतार्थो जातोऽहं गुरुत्वं सफलं मम ॥
ज्ञानं स्वं हि सुपात्रेषु निहितं कुरुते सुखम् ॥१३॥

यथा प्रदीपादपरे प्रदीपे ।
प्रज्वालिते नास्ति तयोस्तु भेदः ॥
तथैव यूयं मदधीतविद्या
ज्ञाने समाना वयमत्र सर्वे ॥१४॥

येषां वंश्योऽहमाद्या ऋषय उद्भवन्
ब्रह्मणो मानसात्ते ।

शास्त्राण्यूचुश्च धर्माद्यखिलजनसुखं
विद्यते येषु नूनम् ॥
पारंपर्येण तानि प्रचुरगुणयुतान्यद्य
मद्गो गतानि ।
प्राज्यं सौख्यं च तेभ्यः प्रभवतु भवतां
वर्धतां राजलक्ष्मीः ॥१५॥

कुमाराः—भगवन् । भगवता कृतसंस्कारान्तमस्माकं सर्वं शुभोदर्कं भविष्यतीति नात्र संशयः। अद्य नगराद्बहिर्गत्वा यथाधीतधनुर्वेदाभ्यासं कर्तुमिच्छामः । तद्यदि भगवतोऽनुज्ञा स्याद्यथेष्टं साधयामः(4) ।

वशिष्ठः—अद्य प्रतिपद्दिनं न किमप्यध्यापयिष्यामि । तद्यथेष्टं गच्छन्तु भवन्तः । अहमप्यनध्यायकरणीयं करिष्यामि । (निष्क्रान्तः)

---

(4) "प्रायेण ण्यन्तकः साधिर्गमनार्थे प्रयुज्यते ,, सा० दा० ।

रामः—अस्याः पुरो दक्षिणतो गत्वा धनुर्हस्त-
लाघवं यथाधीतमभ्यस्यामः ।

भरतः—किं पार्श्वानुचरा ज्ञापिता भवेयुः ।

रामः—न ।

चत्वारो न च शिशवो वनं प्रयामो ।
नो दूरे तदपि वयं गृहीतशस्त्राः ॥
कर्त्तव्यं न तदनुयायिनिघ्नमस्ति ।
गोप्यन्ते(5) स्वभुजबलेन बाहुजा हि ॥१६॥

( सर्वे परिक्रामन्ति )

शत्रुघ्नः—( नेपथ्याभिमुखमवलोक्य ) अविज्ञापितास्मद्-
गमना अपि अनुयायिनोऽन्वायान्त्येव ।

लक्ष्मणः—( नेपथ्याभिमुखम् ) भो भोः पार्श्वानुचराः
धनुर्लाघवमभ्यस्तं कर्तुं यामो वयं खलु ॥
भवद्भिर्न श्रमः कार्यो गम्यतां च यथागतम् ॥१७॥

---

(5) cf " स्ववीर्यगुप्ता हि मनोः प्रसूतिः " रघुवंशे (२।४)

( पुनः परिक्रामन्ति )

रामः—( पृष्ठतोऽवलोक्य ) एते खलु न निवर्तन्ते।

लक्ष्मणः—भो भोः—यदि न निवर्त्स्यथ मम बाणलक्ष्यत्वमवाप्स्यथ । ( धनुः सज्यं करोति )

रामः—मैवं सौम्य, स्निग्धा आत्मीया एते । न भर्त्सनीयाः । ( नेपथ्याभिमुखम् ) भोः, अस्माकं जीवितैः शापिताः स्थः । तन्निवर्तध्वम् ।

भरतः—निवृत्ताः सर्वे ।

( पुनः परिक्रामन्ति )

रामः—इतः परं गमनेन को लाभः । अत्रैवारभ्यतां धानुष्कता । ( सर्वे उपविशन्ति )

शत्रुघ्नः—( उत्थाय )

भो भोः पश्यत कौतुकं मम पुरो यो वर्तते पिप्पल- ।
स्तत्पत्राणि समीरणेन चलतां प्राप्तान्यमी सर्वतः ।

सच्छिद्राणि करोमि तानि विशिखेनैकेन सर्वाण्यपि ।
स्वं कर्माथ विधाय सत्वरमिमं बाणं निषङ्गे तथा ॥१८॥

( बाणं क्षिपति )

रामभरतलक्ष्मणाः—साधु वत्स साधु ।

भरतः—दीर्घायुषा शास्त्रविदा शत्रुघ्नेन यथा कृतम् ।
अन्यं तरुं विद्धदलं तथैव विदधाम्यहम् ॥१९॥

( बाणं क्षिपति )

रामः—साधु वत्स साधु । दर्शितं त्वया धनुर्वेदकौशलम् ।

लक्ष्मणः—( धनुरारोपयन् )

समूलमुत्पाट्य शरेण वृक्षम् ।
एकं ततस्तं कणशो विभाज्य ॥
क्षिपामि दूरे मम सायकस्तु ।
कृतस्वकार्यः पुनरेति तूणम् ॥२०॥

अन्यच्च—

स्तब्धं करोमि विशिखेन चलत्पलाशम् ।
वृक्षं शिलां च महतीं तृणवत्सकम्पाम् ॥

( बाणौ क्षिपति )

अहो पश्यत

भीता मृगाश्च विहगाश्च वनं विहाय ।
क्षिप्रं प्रयान्ति गतिलाघवदर्शनीयाः ॥२१॥

भरतशत्रुघ्नौ—अहो अद्वितीयं बाणक्षेपकौशलं महाभागस्य ।

रामः—साधु वत्स साधु—

सार्धं त्वया युधि सुरासुरमानवेभ्यो ।
भीतिर्भविष्यति न मे विजयस्तु नूनम् ॥
वीरेऽनुगच्छति तथा त्वयि मामजस्रम् ।
मृत्योरपीह विभवान्न भयं मम स्यात् ॥२२॥

लक्ष्मणभरतशत्रुघ्नाः—( बद्धाञ्जलयः ) तात—ज्येष्ठो भवान् गुणाकरश्च—

महान्तो ये विद्यागुणगरिममान्यास्तु तनयाः ।
स्तुवन्त्यन्यान्नूनान्पिदधति महत्त्वं निजमतः ॥

रामः—
गुणैः स्तुत्यः सर्वो भवति न वयःकारणमिह ।
न खद्योता +वृद्धा विदधति दिनं बालतरणौ॥२३॥

भरतलक्ष्मणशत्रुघ्नाः—
गुणैश्च वयसा ज्येष्ठो विनीतो नयवांस्तथा ।
अतोस्माकं भवान्मान्य ।

रामः—आत्मीये दृश्यते गुणः ॥२४॥

भरतलक्ष्मणशत्रुघ्नाः—अस्माकं धनुर्वेदवित्ता दृष्टा स्तुता च भवता । भवतोऽपि तां वयं द्रष्टुमिच्छामः ।

रामः—
जन्मसंस्कारविद्यासु समानत्वमिहास्ति नः ।
कथं गुणेषु वैषम्यं भवेदिति विचार्यताम् ॥२५॥

+ दृश्या 'ख'

भरतः—

समाने प्रभवादौ च गुणवत्ता तथेतरा ॥
समुद्रादेव जायन्ते मुक्ताश्चापि वराटिकाः ॥२६॥

रामः—नियोजितोऽस्मि युष्माभिः। (स्वगतम्) ये प्रयोगा वत्सैर्दर्शितास्तानेव दर्शयामि। ततोऽधिकेषु दर्शितेषु वत्सानां लघुत्वमाभायात्। (प्रकाशम्) वत्स शत्रुघ्न यत्त्वया कृतं तदहमपि कर्त्तुं यते। (धनुरारोपयति)

(दूरे प्रविश्य)

विश्वामित्ररावणौ—(स्वगतम्) असौ रामः।

व्यूढोरो× दधदुन्नतांस ऋषभस्कन्धश्च दीप्ताननः।
पद्भ्यां सन्नमयन्निवावनिमिमां तेजस्विनामग्रणीः॥
त्रैलोक्यावनशक्तिरुद्धतमनोभीतिप्रदोऽयं सत-।
स्त्रातुं(6) किं धरणीमवातरदहो देवोऽच्युतो दैत्यहा(7) ॥२७॥

---

× व्यूढोरस्कतनूलतांस—'ख' (6) सतस्त्रातुमिति सम्बन्धः।
(7) अत्र बाहुलकात् क्विप्।

सम्प्रति—

ये सायका रामधनुर्विमुक्ता ।
न प्राप्य लक्ष्यं तु ममाशुगैस्ते ॥
भिन्ना भविष्यन्ति ततश्च रामम् ।
क्षुब्धं करोम्येष निगूढदेहः ॥२८॥
शस्त्रेऽपराद्धे भवति प्रचण्डो ।
दृश्यत्वमायाति ततश्च वीरः ॥
क्रीडारतो वाऽविकृतः शयानः ।
सिंहोपि न स्वं महिमानमेति(8) ॥२९॥
पश्यामि शौर्यमस्याद्य क्षोभयित्वा यथाश्रुतम् ।
विक्रान्तो वा मृदुर्वायं ततो ज्ञातो भविष्यति॥३०॥

( निष्क्रान्तौ )

रामः—पश्यन्तु वत्साः । तस्मिन्वृक्षे सर्वाण्येव पत्राणि मम सायकेन सच्छिद्राणि भविष्यन्ति ।

---

(8) cf "प्रायः स्वं महिमान क्षोभात्प्रतिपद्यते वीरः" शाकुन्तले। (६।६०

( इति बाणं क्षिपति । साश्चर्यम् ) किं लक्ष्यमप्राप्य मध्येमार्गं मम बाणस्य द्वौ खण्डौ जातौ ॥

शत्रुघ्नः—पुराणशरः शरः स्यात् ।

लक्ष्मणः—भग्नशरः शरो भवेत् ।

भरतः—मध्येमार्गं +चक्रानिलः स्यात् ।

रामः—भवतु भूयो बाणं क्षिपामि । ( शरं सन्दधाति )

( प्रविश्य दूरे )

विश्वामित्ररावणौ—सम्प्रति खलु रामः—

शस्त्रापराधजनितामितचण्डकोपो ।
दृग्भ्यां ×क्षिपन्निव हुताशकणान्समन्तात् ॥
सन्दृश्यते कुपितसिंहसमः समस्तम् ।
लोकं भयार्तमनसं किमयं न कुर्यात् ॥२१॥

( निष्क्रान्तौ )

( रामः पुनर्बाणं क्षिपति )

सर्वे—भूयोपि सैव गतिर्बाणस्य ।

रामः—भवतु महाराजेनाहं समन्त्रं वायव्यास्त्रं

---

+ वक्रानिलः 'ख' × किरन्निव 'ख'

ग्राहितस्तेन तरुं तमेवोन्मूल्य दूरं क्षिपामि।

( दूरे प्रविश्य )

विश्वामित्ररावणौ——किं वायव्यास्त्रसंहारोपि मया
कर्त्तव्यः । तथैवास्तु

( निष्क्रान्तौ ) ( रामः क्षणं ध्यात्वा बाणं क्षिपति )

सर्वे——न मनागपि कम्पं प्राप्तः पिप्पलः ।

रामः——अनेकशो मे (9)रहसि प्रयोगः ।
परीक्षितोयं मरुदस्त्रनामा ॥
कथं नु मोघत्वमिहास्य जातम् ।
पराक्रमस्येव विधौ प्रतीपे ॥३२॥

भवतु (सक्रोधम् )

आग्नेयास्त्रं ममैतत्तरुममुमखिलं धक्ष्यति
प्राज्यतेजः ।
सर्वे स्युस्तत्र दग्धाः क्षितिरुहनिलयाः
पक्षिणः प्राप्तकालाः ॥

---

(9) See foot note 2 Act 1

नो चेदस्त्रापराधोद्भवदहनशिखालीढगात्रो
ममायम् ।
देहो भस्मत्वमाप्तो भवति हि न सहे मोघतां
स्वास्त्रकार्ये ॥३३॥

(दूरे प्रविश्य)

रावणः—(स्वगतम्)

+एकाकिनोपि क्षुभितं मृगारिम् ।
पिनाकपाणिं हरमुग्रमर्कम् ॥
न पश्यतो मे चलितं मनः स्यात् ।
यथाद्य रामेऽजनि सज्जशस्त्रे ॥३४॥

ज्वलनास्त्रस्य संहारं प्रतीकारं च वेद्म्यहम् ।
किन्तु नोत्सहते चेतः स्थातुं रामेऽत्र कोपिते ॥३५॥

भवतु गच्छामि । अहो जातोऽयं प्रथमावतारो
रावणभयस्य (निष्क्रान्तः)

(प्रविश्य दूरे)

विश्वामित्रः—(स्वगतम्)

---

+ विनापि शस्त्रं 'ख'

दधदमितं बलं परबलं न मनो मम
वीतसाहसम् ।
कृतवदहो न कुत्रचिदरं धृतकार्मुक एष
मन्त्रवित् ॥
दशरथसूनुरत्र कुरुते पुरतो हृदयस्य
वेपनम् ।
भवति महः किमप्यमितमूर्जितमाकृति-
दृश्यमद्भुतम् ॥३६॥

(10)हिंस्राः परः शताः सन्ति बलिनो हन्ति
ते मृगान् ।
हरेः किन्त्वद्भुतं तेजः करोति क्षुभितं
वनम् ॥३७॥

अहो तुलिताखिलदेवासुरबलोऽविगणितनिखि-
लभुवनविदारणक्षममहाशैलभिद्दुरशक्तिर्महा-

(10)cf. " हिंस्राः सन्ति सहस्रशोपि विपिने शौण्डीर्यवीर्योद्यताः ।
किन्त्वेकस्य वयं स्तुवीमहि महः सिंहस्य विश्वोत्तरम् ॥
केलिः कोलकुलैर्मदो मदकलैः कोलाहलो नाहलैः ।
संहर्षो महिषैश्च यस्य मुमुचे साहंकृते हुंकृते ॥ "

प्रभावो विदित +सर्वास्त्रसंहारः शिलोच्चय इवा-
प्रकम्प्यदेहो रावणोऽपि क्षुभितं रामं विलोक्य
तद्बाणपातजनितप्रकम्पनो मृगेन्द्रदर्शनोद्भू-
तमृत्युशङ्कः कुरङ्ग इव पलायते । यावदसौ
दुरात्मा रथमारुह्य स्वपुराभिमुखो न प्रतिष्ठते
तावदनुगच्छाम्येनम् । कदाचिदत्र कस्यापि
क्षतं विदध्यात् । ( निष्क्रान्तः)

( रामश्चिरं ध्यात्वा बाणं क्षेप्तुं प्रवृत्तः )

भरतः—आर्य प्रसीद । तस्मिन्वृक्षे दग्धे सर्वे
वृक्षवासाः पक्षिणो निरागसो विपद्यन्ते ।

न खलु न ×खलु वध्याः पक्षिणोऽनागसस्ते ।
सह पृथुककलत्रैस्तत्र वासः कृतस्तैः ॥
क्व बत विहगदेहाश्चञ्चला लाघवेन ।
क्व पुनरशनिकल्पा मृत्युदूताः शरास्ते ॥३८॥

आर्त्तत्राणं दस्युनाशं क्षत्राः शस्त्रेण कुर्वते ।

---

+ विदिताखिलधनुर्वेदः 'ख' × दहनयोग्याः 'ख'

नानागसां पीडनं तु संहरार्य ततः शरम् ॥३९॥(11)

रामः—(सलज्जमिव) भवतु वायव्यास्त्रेण तां महतीं शिलां दूरं क्षिपामि ।

लक्ष्मणः—तत्र तु तस्य मोघत्वमभूत् ॥

रामः—सापराधमिदमस्त्रम् ॥

भरतः—( अग्रतोऽवलोक्य ) आर्य—

अपराध्यन्नसौ बाणः समन्त्रस्ते सुहृत्खलु ॥

(12)अभविष्ट तवाद्यायं त्राता स्त्रीवधपातकात् ॥४०॥

रामः—कथमिव ?

---

(11)cf. "नखलु न खलु बाणः सन्निपात्योयमस्मिन् ।
मृदुनि मृगशरीरे पुष्पराशाविवाग्निः ॥
क्व वत हरिणकानां जीवितं चातिलोलम् ।
क्व च निशितनिपाता वज्रसाराः शरास्ते ॥ १० ॥
तत्साधुकृतसन्धानं प्रतिसंहर सायकम् ।
आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि ॥ ११ ॥
Shakuntala Act. 1

(12) अभविष्टेति कथमत्रात्मनेपदम् । अशुद्धमिति बाला वक्ष्यन्ति । आर्षमिति बहवः पण्डिताः । अहं तु नैतदपाणिनीयं मन्ये ।

भरतः—

यत्र लक्ष्यं शरस्यासीत्तत्र तत्रैव दृश्यताम् ॥
पञ्चषा योषित सन्ति न जाने केन हेतुना ४१

रामः—( विलोक्य ) नूनं सन्ति । ता अस्माकं प्रासादचेट्यः । अहो मन्थरा च ।

( ततः प्रविशन्ति चेट्यो मन्थरा च )

मन्थराः—अले दासीओ, परवसा +हु दासीआ होंदि । तुम्हे उण सेवाकम्मं चइअ कीश एत्थ कीलेध । ता जधागदं गच्छीअदु

( अरे दास्यः परवशाः खलु दास्यो भवन्ति । यूयं पुनः सेवा कर्म त्यक्त्वा कथमत्र क्रीडथ । तद्यथागतं गम्यताम् । )

---

वीरस्य श्रीरामस्य बाणो मोघतामभजदिति—अशक्तशिशुक्षिप्तबाण इव सोऽभवत् न रामस्य बाण इव । ततश्च कर्मव्यतीहार आत्मनेपदम् (पा. १।३।१४) । यद्यपि सूत्रस्योस्योदाहरणेषु सर्वत्र सोपसर्ग एव भवतिर्दृश्यते ग्रन्थेषु तथापि न पाणिनिसूत्रे सोपसर्गस्यात्मनेपदमुक्तम् । अतो विनाप्युपसर्गं तस्मादात्मनेपदं नाशुद्धम् ।

+ क्खु 'ख' × उज्झिअ 'ख'

मधुरिका—णिउत्तिदं जं अम्हेहिं करणिज्जं । अण्णाओ च चेडीओ तहिं उवट्ठिदा । गहिदो अम्हेहिं खणो । कज्जे समुवट्ठिदे तहिं गच्छम्ह ।

( निवर्तितं यदस्माभिः करणीयम् । अन्याश्च चेट्यस्तत्रोपस्थिताः । गृहीतोऽस्माभिः क्षणः । कार्ये समुपस्थिते तत्र गमिष्यामः )

मन्थरा—भोः, कदा किं कज्जं त्ति कीश जाणध । उच्चावचकज्जा राणीओ अछंदि× ता जाध

( भोः कदा किं कार्यं भविष्यतीति कथं जानीथ । उच्चावचकार्या राज्ञ्यो भवन्ति तधात ) ।

चतुरिका—तुमं पि दासी । जधा अम्हे अण्णाणं देईणं कम्मं करेम्ह तह तुमं केकईए कम्म करेसि

( त्वमपि दासी । यथा वयमन्यासां देवीनां कर्म कुर्मस्तथा त्वमपि कैकेय्याः कर्म करोषि ) ·

मन्थरा—केकई मह पुत्तिआ सहीसमाणा अ । सेऽव्वं ण कलेमि सहज्जं ताए कलेमि । जुज्झे गब्भदासीआओ ण जाणध ( कैकेयी

× होंदि 'ख'

मम पुत्रिका सखीसमाना च । सेवां न करोमि साहाय्यं तस्याः करोमि । यूयं गर्भदास्यो न जानीथ )

**चतुरिका**—कहं तुमं ण दासी । दासी विइ भसेसि (कथं न त्वं दासी दासीव भाषसे [or भषसि] )

**मन्थरा**—हुं, दासी विअ भसेसि (हुं दासीव भाषसे)

( संस्कृतमाश्रित्य )

न जनन्यामुभे दासी माता चेत्येकसंस्थिते ॥
सेवते स्निह्यति ततो जननी दैवतं परम् ॥४१॥

**मधुरिका**—जइ तुमं विअ दासीकम्म करेन्ती कावि जणणी भवे । ता अम्हे सव्वाओ देईणं जणणीओ (यदि त्वमिव दासीकर्म कुर्वती कापि जननी भवेत्तर्हि वयं सर्वा देवीनां जनन्यः )

**मन्थरा**—णं अहं सक्कअं भणामि

( नन्वहं संस्कृतं भणामि ) ।

**चतुरिका**—(संस्कृतमाश्रित्य) तव संस्कृतेप्यविनयो विकत्थना च तव दासीत्वं कथयतः । नाभिजाता विकत्थन्ते ।

मन्थरा—इदो गच्छीअदु त्ति अहं आणवेमि तुम्हे
(इतो गम्यतामिति अहमाज्ञापयामि युष्मान् )

सर्वाः—(विहस्य) किं दासी वि आणवेदि
( कि दास्यप्याज्ञापयति )

मन्थरा—( स्वगतम् ) एदाओ गब्भदासीओ मं परिहोंदि । मह परिहवो केकइए ज्जेव परिहवो । समीवे एत्थ वट्टइ भरदो । कदावि एदाओ रामाणुरत्ताओ तस्स अणलिअं आचरेंदि । ता णिहुदा भविअ पेक्खामि । ( प्रकाशम् ) तहिं गदुअ तुम्हाणं अविणअं देईणं णिवेदेमि । (एता गर्भदास्यो मां परिभवन्ति । मम परिभवः कैकेय्या एव परिभवः । समीपेऽत्र वर्तते भरतः । कदापि एता रामानुरक्ता स्तस्यानार्यमाचरन्ति । तन्निभृता भूत्वा पश्यामि । तत्र गत्वा युष्माकमविनयं देवीभ्यो निवेदयामि ।

( निष्क्रान्ता )

चतुरिका—गदा क्खु रूवाणुरूवकुडिलभावा मंथरा । कुरूवावि एसा ण कं पि गणेदि ।

जइ सुरूवा भवे ण जाणामि किं करउ । महुरिये, गोरीमंडवप्पसाधणस्स वडपिप्पलपलासवल्लवाणि अवचिणिदुं एत्थ आअदा अम्हे । दूरे +एदं ठाणं पासादादो । ता शिग्घं करीअदु वल्लवावचाओ (गता खलु रूपानुरूपकुटिलभावा मन्थरा । कुरूपाण्येवा न कमपि गणयति । यदि सूरूपा भवेन्न जाने किं कुर्यात् । मधुरिके, गौरीमण्डपप्रसाधनाय वटपिप्पलपलाशपल्लवान् अवचेतुमत्रागता वयम् । दूर एतत्स्थानं प्रासादात् तच्छीघ्रं क्रियतां पल्लवावचायः ) ।

पुष्पलतिका—(ऊर्ध्वमवलोक्य) इमस्स पिप्पलरुक्खस्स (13)सव्वे वि पत्ताणिं सछिद्दाइं । किं एदं भवे (अस्य पिप्पलवृक्षस्य सर्वाण्यपि पत्राणि सच्छिद्राणि । किमेतद्भवेत् )

(सर्वाः साश्चर्यं निरूपयन्ति )

चतुरिका—(भूमावलोक्य) अण्णं अ बहुणो पदचिंधाइं एत्थ भूमीए मणुस्साणं । ( निरूप्य ) ण केवलं मणुस्साणं पदचिंधाइं अस्साणं

---

+ 'ख' पुस्तके एतद्वाक्यं नास्ति । (13) 'सव्वे वि पत्ताइं' इति लेखप्रमादोऽनुमीयते 'सव्वाइं पत्ताइं' इति पाठो युक्तः ।

अ णेमिचिंधाइं अ (अन्यच्च बहूनि पदचिह्नान्यत्र भूमौ न केवलं मनुष्याणां पदचिह्नानि, अश्वानां च नेमिचिह्नानि च)

मधुरिका—रहेण कुमाला एत्थ आअदा त्ति तक्केमि (रथेन कुमारा अत्र आगता इति तर्कयामि)

चतुरिका—एत्थ ज्जेव चिंधाइं । ण रहस्स आगमणं पडिगमणं अ लक्खीअदि (अत्रैव चिह्नानि न रथस्यागमनं प्रतिगमनं च लक्ष्यते)।

मधुरिका—(सभयम्) अदिट्ठं किं पि भूदं एत्थ आअदं ता शिग्घं जधागदं गच्छम्ह (अदृष्टं किमपि भूतमत्रागतम् । तद्यथागतं गच्छामः) (निष्क्रान्ताः)।

भरतः—सभया इव पलायन्ते चेट्यः । नूनं किमपि तत्र भयकारि वर्त्तते ।

शत्रुघ्नः—तत्रैव चार्यस्य शस्त्रं मोघतामगमत् ॥

रामः—कोऽपि तिरस्करिणीच्छन्नोऽस्माकं प्रतीपकृत् तत्र भवेत् । श्रुतं च मया योगप्रभावात्, मायाप्रभावाच्चादृश्यत्वं भवति ।

योगिनो न नः प्रतीपाः(14) । भवतु भावगामि मेऽस्त्रं यददृश्यमपि विध्यति । तेन दर्शयामि स्वास्त्रकौशलम् । न च हन्मि तमदृश्यम् । भो अदृश्य,+

अदृश्यप्रणयी बाणो त्वां नान्यं विध्यति क्षणात् ॥
रक्तपा स्तनलग्ना हि पिबत्यस्त्रं पयस्तु न ॥४२॥

( बाणं सन्धत्ते )

(ततः प्रविशति दूरे वशिष्ठः)

भरतः—(दृष्ट्वा) अहो प्रमादः । आर्य भगवान् गुरुस्त्वया बाणलक्ष्यतामानीतः । तदाशु प्रतिसंह्रियतामाशुगः ।

रामः—( बाणं प्रतिसंहरन् ) कथं तत्र गुरुः । योगप्रभावपिहितदेहो भवेत्तत्रास्माकं चिकीर्षितं पश्यन् सः । अस्यैव योगशक्त्या ममास्त्राणि मोघानि जातानि । पूजार्होऽयं मया बाण-

---

(14) मायाविषु दण्डितेषु तु नानौचित्यमित्यर्थः ।

+ भोस्तिरस्करिणीच्छन्न । 'ख'

लक्ष्यतामानीतः । एवमविज्ञातानि दैवता-
न्यभिभूयन्ते(15) ।

स्थापयित्वा चरणयोः स्वं शिरस्तस्य साम्प्रतम् ॥
आगः क्षमां महात्मानं याचिष्यामो क्षमेत सः ॥३३॥

सर्वे—तद्गच्छामः (उपसृत्य पादयोः पतित्वा)

वयं त्वया रक्षणीया भगवन्सागसोप्यथ ॥
सगुणो निर्गुणो वा स्यात्स्वो बालो रक्ष्य एव हि ॥३४॥

सुतस्य शिष्यस्य च योऽपराधः
स मर्षणीयो गुरुभिः कृपायाः ॥
स्वकर्म न ज्ञायत एव बालै-
स्तद्विस्मृतं किं गुरुभिर्भवेत× (16) ॥३५॥

वशिष्ठः—किमेतत्। नाहं क्रुद्धः। उत्तिष्ठन्तु दीर्घायुषः।

रामः—महाशिला अपि चूर्णीकर्त्तुं समर्थो मम बाणः। भवांश्च वृद्धः। यच्छङ्के खलूकृत्वा तत्।

---

(15) cf. The Swapna Vasavadatta 'एवमनिर्ज्ञातानि दैवतान्यवधूयन्ते । Act. 1. × भवेच्च 'ख'

(16) See note 12 Act. 3.

वशिष्ठः—शस्त्रास्त्रज्ञोऽपि त्वं बाल एव—॥ यतः—

यस्मिन्नस्त्रैः सम्प्रयुक्तैश्चिराय ॥
विश्वामित्रेणाभवन्नैव किञ्चित् ॥
तस्मिन्देहे मे त्वया बालकेन ॥
क्षिप्तैः शस्त्रैर्जायतां का विकारः ॥४६॥

ब्राह्मं वर्म शमप्रधानमपि यच्छक्राशनिं
वारयेत् ।
तन्नित्यं विधृतं मया न हि ततः
शस्त्रास्त्रभीतिर्मम ॥
शस्त्रैर्नैव भवेत्क्षतो यमवतः कस्यापि
देहो मनाक् ।
अन्येषां भयमस्तु सायककृतं तद्योगिनां
न क्वचित् ॥४७॥

किन्तु मां लक्ष्यीकृत्य क्षिप्ता बाणा धन्विनमेव क्षतं कुर्वन्ति न च मां तत्र ज्ञात्वा त्वयास्त्राणि प्रयुक्तान्यासन् । ततः किमपि नाभवद्यन्नेष्टम् ।

रामः—भगवान् गुरुरस्माकं मन्त्रद्रष्टा ऋषिर्भवान् ।
कृपालुरस्मासु ततो यन्नेष्टं तत्कथं भवेत् ४८

भरतः—अथ किंरूपमस्माकं मङ्गलं निश्चित्य भगवता सम्प्रतीहागमनश्रमोऽङ्गीकृतः ।

वशिष्ठः—अहमपि वनसञ्चारमिच्छन्नितः प्रस्थितो वर्त्मनि कस्यापि कमण्डलुं भूमौ दृष्ट्वा तत्रैव स्थितः । ततो ज्ञातं विश्वामित्रस्य स इति ।

रामः—किं विश्वामित्रोऽपि तत्रास्ति ? ।

वशिष्ठः—स रावणमनुगतः । तेन चोक्तं श्वो महाराजानं किमपि याचितुमागमिष्यामीति ।

रामः—श्वस्तर्हि धन्यतरा भविष्यामो +विश्वामित्रं दृष्ट्वा । किन्तु—एतावदेत्य कथमद्यैव तेन वयमाशीर्भिर्नाभिनन्दिताः । कुतश्च रावण आगमत् । श्रूयते स महाबलः । सुरासुराणां जेता वर्चस्वी सर्वविद्यापारदृश्वा च केवलमधर्मपोषकृत् ।

---

+ विश्वामित्रदर्शनेन 'ख'

वशिष्ठः—रावणो वत्सानां किमप्यनिष्टमाचरितु मिहागमत् । तेन रथः स्वदेहश्च तिरस्करिण्या निगूढौ। ततो विश्वामित्रोऽपि श्रुतप्रभाववान् वो द्रष्टुमायात् । सोपि रावणचिकीर्षितं जिज्ञासन् योगप्रभावेन स्वमनवलोकनक्षममकरोत् ।

रामः—ततस्ततः ।

वशिष्ठः—रावणो जिज्ञासितं ज्ञात्वा यथागतमगमत् । विश्वामित्रश्च नायं पापो मार्गे पापमाचरेदिति तपोवनं यावत्तमनुगतः । अहं चैतद्वो निवेदयितुमत्रागच्छामि ।

रामः—तर्हि श्वो विश्वामित्रं द्रक्ष्यामः ।

वशिष्ठः—मयाध्यापिता विनयनियमा यथा न ह्रेपिता भवेयुस्तथा स ऋषिः पादस्पर्शपुरःसरमभिवादयितव्यः ।

रामः—किन्तु स क्षत्रिय इति श्रुतमस्माभिः ।

वशिष्ठः—क्षत्रपुत्र आसीत्ततः किम् ।

रामः—कथं ब्राह्मणवत्क्षत्रियस्य चरणौ शिरसा स्पृष्टा भवेताम् ।

वशिष्ठः—तपो महत्तेन तप्तम् ।

रामः—न केवलं तप एव ब्राह्मणत्वे हेतुः । यतः—उक्तम्

तपः श्रुतं च योनिश्चेत्येतद्ब्राह्मणकारकम् ।(17)
त्रयमेव भवेद्यत्र स पूज्यो ब्राह्मणः सताम् ॥४९॥

वशिष्ठः—एतद्वचनं सामान्यतपोविषयम् । महतस्तपसः फलमलोकसामान्यम् ।

रामः—कथमिव ।

वशिष्ठः—तपःप्रभावान्न केवलं विश्वामित्र एव तस्य पिता पितामहश्च ऋषित्वं ब्रह्मत्वञ्चावाप्नुताम् ।

भरतः—किं स ब्राह्मणोऽब्राह्मणो वा । यथा

(17) अस्य श्लोकस्य पूर्वार्धं पातञ्जले महाभाष्ये दृश्यते ।

गुरूणामादेशस्तथैवास्माभिः कर्त्तव्यम् । अथ च वयं क्षत्त्राः स विद्यया वयसा तपसा चास्माकमर्हणामर्हतीत्यलं विचारितेन ।

रामः—तथैवास्तु । कर्त्तव्यं तु गुरवः सदैव प्रष्टव्याः ।

वशिष्ठः—यन्मयोक्तं तन्न विस्मरणीयम् ।

सर्वे—यथागुरवः प्रसीदन्ति ॥

( निष्क्रान्ताः कुमारा वशिष्ठश्च )

(प्रविश्य)

मन्थरा[+]—दिट्ठं सुदं सव्वं मए । कवडपंडिदो वसिट्ठो सदा रामेण ज्जेव सह वीसद्धालावं करेदि । ण अ भरदं किं पि गणेदि । परिअणो वि दासीएपुत्तो रामं अणुरत्तो । एत्थ रावण आअदो त्ति ते कहेंदि । तस्स कम्मं सुणिअ सो अणज्जजादि त्ति जाणीअदि । अप्प-डिरहत्तणं तस्स सुणीअदि । बुड्ढो राआ

+ 'ख' पुस्तके मन्थराप्रवेशवचने न स्तः ।

वि रामस्स रज्जं दइस्सदि त्ति जाणीअदि। जइ रावणाह रामविरोहो होसइ ता भरदस्स णिक्कंडअं रज्जं भवे। मह भट्टिदारिआ वि केकई उज्जुअत्तणादो रामं ज्जेव अणुरत्ता। णाहं मंथरा जा भरदो रज्जं ण लहइ अणज्जे असुरे पारसवा पिसाचा रामस्स महाराअस्स वा शत्तुणो कदुअ अहं भरदं महाराअं करिस्सं। पेक्खामि किं करेदि बुड्ढवसिट्ठो वा सुमंतो वा। अम्मो सुमन्त आअच्छदि। (दृष्टं श्रुतं च सर्वं मया कपटपण्डितो वशिष्ठः सदा रामेणैव सह विश्रब्धालापं करोति। न च भरतं किमपि गणयति। परिजनोऽपि दास्याः पुत्रो राममनुरक्तः। अत्र रावण आगत इति ते कथयन्ति। तस्य कर्म श्रुत्वा सोऽनार्यजातिरिति ज्ञायते। अप्रतिरथत्वं तस्य श्रूयते। वृद्धो राजापि रामाय राज्यं दास्यतीति ज्ञायते। यदि रावणस्य रामविरोधो भविष्यति तद्भरतस्य निष्कण्टकं राज्यं भवेत्। मम भर्तृदारिकाऽपि कैकेयी ऋजुत्वाद्राममनुरक्ता। नाहं मन्थरा यदि भरतो राज्यं न लभते। अनार्यान् असुरान् पारशवान् पिशाचान् रामस्य महाराजस्य वा शत्रून् कृत्वा अहं भरतं महाराजं

करिष्यामि । प्रेक्षे किं करोति वृद्धवशिष्ठो वा सुमन्त्रो वा । अम्मो सुमन्त्र आगच्छति) (निष्क्रान्ता) ।

(ततः प्रविशति सुमन्त्रः)

सुमन्त्रः—अद्य विश्वामित्र ऋषिरागतः । श्वः पुनरागमिष्याति । रावणोप्यागत्य गतः । कथं रावणोऽस्माकमातिथ्यमगृहीत्वा गत इति खिद्यते मनो महाराजस्य । भवेत्स क्षत्रियवैरी किन्त्वागत आतिथ्यमर्हति ।

स्कन्धे कुठारं निशितं निधाय ।
छेत्तुं तरून्याति नरो वनं चेत् ॥
छायाफलादीनि न संहरन्ते ।
तस्मात्तु वृक्षा इदमुत्तमत्वम् ॥५०॥(18)

(नेपथ्ये)

अत्रागतो रावणोऽद्य राज्ञा श्रुत्वैतदद्भुतम् ॥
उक्तं रात्रावप्रमत्तैर्भ्रम्यतां रक्षकैः× पुरि ॥५१॥

---

(18) cf. "छेत्तुः पार्श्वगतां छायां न हि संहरते द्रुमः"

× सैनिकैः 'ख'

सुमन्त्रः—( श्रुत्वा ) अहं तद्रक्षकेभ्यो निवेदयितुं गच्छामि । (निष्क्रान्तः)

(ततः प्रविशतो गन्धर्वौ)

रामं नेष्यति कौशिकोऽप्रतिरथो ज्ञाता महास्त्राणि सः ।
लब्ध्वा येन तपोबलं सुरपतिर्नित्यं भयं लम्भितः ॥
शापेनाथ शरेण रावणमयं कुर्याद्यमस्यातिथिम् ।
निश्चिन्तौ भवतां धनामरपती रामस्य रक्षाविधौ ॥५३॥

रामोपि बलवान् वीरः सर्वशस्त्रभृतां वरः ॥
नूनं हनिष्यति बहून् राक्षसान् रावणप्रियान् ॥५४॥

( निष्क्रान्तौ )

॥ इति तृतीयोऽङ्कः ॥

## ॥ चतुर्थोऽङ्कः ॥

( ततः प्रविशन्ति प्रासादाजिरे चत्वारो वैतालिकाः )

**एकः**—सुणाहि ले भसअ कडुकंठअ । मए तुह गीदं बहुसो सुदं । तुमं पि मह गीदं सुणाहि । तुह गीदं भज्जंतस्स सुक्खवेणुस्स ज्जेव सद्दो । (शृणु रे भषक कटुकण्ठक । मया तव गीतं बहुशः श्रुतम् । त्वमपि मम गीतं शृणु । तव गीतं भज्यमानस्य शुष्कवेणोरिव शब्दः ) ।

**द्वितीयः**—सुणाहि रे मालवअ । तुह वि सरो रासहस्स सरं अणुकरेदि (श्रुणु रे मालवक । तवापि स्वरो रासभस्य स्वरमनुकरोति ) ।

**तृतीयः**—तुम्हे दोणि ज्जेव गीदं ण जाणत्थ । मह गीदं पुणो वज्जसणाधं सुणिअ मलिस्सध (युवां द्वावेव गीतं न जानीथ मम गीतं पुनर्वाद्यसनाथं श्रुत्वा मरिष्यथ )

**चतुर्थः**—अहं सकअम्मि× गीदं गाएमि । ण

---

× सक्कए 'ख'

अ सकअण्णा तुम्हे । ता ण मह गीदं बहु मणत्था । महाराओ पुणो ण तुम्हाणं कदावि गीदण्णां देदि । तं ज्जेव मह गीदण्णत्तणं (अहं संस्कृते गीतं गायामि । न च संस्कृतज्ञा यूयम् । तत्र मम गीतं बहु मन्यध्वे । महाराजः पुनर्न युष्मभ्यं कदापि गीताज्ञां ददाति । तदेव मे गीतज्ञत्वम्)

मालवकः—भावगेविलो सकअं+ पठइ महाराओ तस्स गीदं सुणादि । जइ महाराओ अम्हाणं गीदं सुणइ ता ण अण्णं कं पि गीदम्मि णिउत्तं करेदि (भावगोपिलः संस्कृतं पठति । महाराजस्तस्य गीतं शृणोति । यदि (यदा) महाराजोऽस्माकं गीतं शृणोति तदा (तर्हि) नान्यं कमपि गीते नियुक्तं करिष्यति) ।

भषकः—अज्ज पच्चूसम्मि अहके पासादम्मि महाराअं पडिवोधेदुं गदो । गोविलेण गाइदुं ण अणुमदो (अद्य प्रत्यूषेऽहं प्रासादे महाराजं प्रतिबोधयितुं गतः । गोपिलेन गातुं नानुमतः) ।

---

\+ सक्कअं 'ख'

मालवकः—तुज्झ गीदं सुणिअ महाराअस्स णिद्दा णूणं गदा भवे। अध सव्वाओ भूदाइं भीदा पलाइदाइं होंदु (तव गीतं श्रुत्वा महाराजस्य निद्रा नूनं गता भवेत्। अथ सर्वाणि भूतानि भीता (!) पलायितानि भवेयुः)।

दन्तिलः—भावे+ गोविल, वज्जं विणा कधं सुणादि तुह गीदं महाराओ। मं तहिं णेहि वज्जं वादेदुं (भाव गोपिल वाद्यं विना कथं शृणोति तव गीतं महाराजः। मां तत्र नय वाद्यं वादयितुम्)।

गोपिलः—पत्तो काले णिवेदइस्सं (प्राप्ते काले निवेदयिष्यामि)। (प्रविश्य)

विदूषकः—किं एत्थ तुम्हे करह (किमत्र यूयं कुरुथ)।

गोपिलः—सुंदरअ साअदं दे (सुन्दरक स्वागतं ते)।

विदूषकः—अज्ज वीसामित्तो इसी आगमिस्सदि। ता सव्वेहिं अम्हेहिं तहिं दट्ठुं गंतव्वं (अद्य विश्वामित्र ऋषिरागमिष्यति तत्सर्वैरस्माभिस्तत्र द्रष्टुं गन्तव्यम्)।

---

+ भाव 'ख'

गोपिलः—पच्चहं महाराअस्स प्पस्सादेण इसिओ दिट्ठा । किं अज्ज वीसामित्तस्स दंसणेण तुह गरुओ पक्खवादो ( प्रत्यहं महाराजस्य प्रसादेन ऋषयो दृष्टाः । किमद्य विश्वामित्रस्य दर्शनेन तव गुरुः पक्षपातः)

विदूषकः—सो क्खु दोणि मुहाणि चउरो हत्था अ धारेदि ण अ पुट्ठं । उभअदो तस्स मुहं ज्जेव दीसइ । (स खलु द्वे मुखे चतुरो हस्तान् च धारयति न च पृष्ठम् । उभयतस्तस्य मुखमेव दृश्यते )

गोपिलः—कधं एदं संभावीअदि (कथमेतत्संभाव्यते) ।

विदूषकः—स बह्मणो खत्तो अ राआ इसी अ अच्छमालाधारी धणुअधरो अ । अग्गदो पुट्ठदो अ देक्खइ । उभअदो मुहाइं विणा कधं एदं सक्कं ( स ब्राह्मणः क्षत्रश्च राजा ऋषिश्च अक्षमालाधारी धनुर्धरश्च । अग्रतः पृष्ठतश्च पश्यति । उभयतो मुखे विना कथमेतच्छक्यम् । )

गोपिलः—दोहिं मुहोहिं कि करेदि ( द्वाभ्यां मुखाभ्यां किं करोति )

विदूषकः—एक्केण वेदं पठदि अवरेण गालीं देदि।
( एकेन वेदं पठति । अपरेण गालीं ददाति ) ।

गोपिलः—चउहिं हत्थेहिं किं करेदि।
( चतुर्भिर्हस्तैः किं करोति )

विदूषकः—दोहिं बह्मकम्मं करेदि दोहिं जुद्धं
( द्वाभ्यां ब्रह्मकर्म करोति द्वाभ्यां युद्धम् ) ।

गोपिलः—चउब्भुजो केवलं भअवं णाराअणो ज्जेव सुणीअदि (चतुर्भुजः केवलं भगवान्नारायण एव श्रूयते ) ।

विदूषकः—भअवदो णाराअणस्स चत्तारो हत्था सरीराह एक्कस्सि भाअम्मि मुहं उण एक्कं ज्जेव । इमस्स दोसुं भाएसुं दोणि दोणि हत्थाओ ( भगवतो नारायणस्य चत्वारो हस्ताः शरीरस्यैकस्मिन्भाग एव मुखं पुनरेकमेव । अस्य द्वयोर्भागयोर्द्वौ द्वौ हस्तौ) ।

गोपिलः—तुए दिट्ठो एवं सो (त्वया दृष्ट एवं सः) ।

विदूषकः—अले मुक्ख ण दिट्ठो णं सुदो सुदं क्खु दिट्ठादो पमाणदमं भोदि (अरे मूर्ख न दृष्टः श्रुतो ननु । श्रुतं खलु दृष्टात प्रमाणतरं भवति )

गोपिलः—जं पच्चक्खं दीसइ तस्सिं दिट्ठं ज्जेव पमाणं ( यत्प्रत्यक्षं दृश्यते तत्र दृष्टमेव प्रमाणम् )

विदूषकः—अले मुक्ख कदावि अच्छि धूमेण रोएण आदवेण अ विअलं भोदि कण्णे उण ण कदावि विअलत्तणं सक्कं ( अरे मूर्ख कदाप्यक्षि धूमेन रोगेणातपेन च विकलं भवति । कर्णे पुनर्न कदापि विकलत्वं शक्यम् )

गोपिलः—भोदु तुए सुदो वीसामित्तो अहं अज्ज पच्चक्खं तं पेक्खिस्सं (भवतु त्वया श्रुतो विश्वामित्रः । अहमद्य प्रत्यक्षं तं प्रेक्षिष्ये ) । ×

विदूषकः—तं निउणं पेक्खिअ जधादिट्ठो सो मह णिवेदीअदु ( तं निपुणं दृष्ट्वा यथादृष्टः स मह्यं निवेद्यताम् )

गोपिलः—तुमं पि तहिं उपट्ठिदो होइहि । सो तुए सअं पेक्खिदव्वो ( त्वमपि तत्रोपस्थितो भविष्यसि । स त्वया स्वयं द्रष्टव्यः ) ।

---

× इतः परं (नेपथ्ये) इत्यन्तः पाठो नास्ति 'ख' पुस्तके ।

विदूषकः——जाणामि तं दट्ठुं ण पारइस्सं त्ति। सो क्खु सुलहकोवो सुणीअदि। कदावि महरिहं मह सिरं तस्स दंडकट्ठेण भग्गं भवे। ता दूरादो चिट्ठिस्सं (जानामि तं द्रष्टुं न पारयिष्यामीति। स खलु सुलभकोपः श्रूयते। कदापि महार्हं मम शिरस्तस्य दण्डकाष्टेन भग्नं भवेत्। तद्दूरादेव स्थास्यामि)।

(नेपथ्ये)

आसन्येन पुरा महाबलभृतः शस्त्रैः परे निर्जिताः।
नित्यं यस्य तपोभिरिद्धमहसः स्वाराड्+
भयं लम्भितः॥
ब्रह्मक्षत्रमहोमहोज्ज्वलतनुर्ब्रह्मागमापां पति-।
र्विश्वामित्र ऋषिः स्थितोऽग्निशरणे सोऽयं
नृपं पालयन्॥१॥

सर्वे——(आकर्ण्य) आअदो वीसामित्तो ता गच्छम्ह (आगतो विश्वामित्रस्तद्गच्छामः)।

(प्रवेशकः)

+ शक्रो 'ख'

( ततः प्रविशत्यासनस्थो विश्वामित्रः )

**विश्वामित्रः—**

**यज्ञरक्षापदेशेन याचे रामं महीपतिम् ।**
**ममास्त्रवेदो येनेत्थं सुपात्रनिहितो भवेत् ॥१॥**

( प्रविश्य )

**सुमन्त्रः—भगवन्नमस्ते ।**

**विश्वामित्रः—यशो लभस्व ।**

**सुमन्त्रः—भगवन् भवदाशिषा कृतकृत्यो बुभूषुर्महाराज इत एति ।**

**विश्वामित्रः—अहं महाराज्ञ(1) आगमनं पालयामि।**

( ततः प्रविशन्ति महाराजो वशिष्ठः कुमारा विदूषकोऽन्ये च पुरुषाः )

**राजा—सावित्रो दशरथस्तपोधनं महामहसं विश्वामित्रमभिवादयते**

**विश्वामित्रः—**(उत्थाय) **अनामययशसी लभस्व ।**

**राजा—उपोपविश्यैवाशीर्वर्षं(2) करोतु भगवान्।**

---

(1) See note 1 Act. 2. (2) द्व्युपोपसर्गपूर्वो विशती रामायणेप्यनेकत्रोपयुक्तो दृश्यते । यथा "न्यवस्यत प्रायमुपोपवेष्टुमनिन्द्यवर्णा भुवि यत्र वाली" ( ४।२०।२६ )

विश्वामित्रः—

देवत्वं पालकत्वं च राजत्वे तव सर्वदा ॥
उत्तिष्ठेयं कथं नाहं त्वां सभाजयितुं सखे ॥२॥

राजा—

यः कश्चिन्मयि वर्तते गुणलवश्चेत्तत्र
हेतुर्भवान् ।
काहं मन्दमतिः क चागमतपःशौर्याश्र-
यास्त्वादृशाः ॥
अर्ह्या मे मुनयो जितान्तरमलाः सर्वे
निरस्तैषणाः ।
शक्रस्यापि सदार्हतस्तव कथं कार्या मया
नार्हणाः ॥३॥(3)

भवत्युत्तिष्ठति कथं मां सभाजयितुं प्रभो ॥
उत्तिष्ठमाना जगति भविष्यामस्स्वकर्मसु ॥४॥

तदुपविश्यताम् ।

---

(3) अन्ये मुनयस्तु—अर्हणामर्हन्ति । भवतस्त्वर्हणाः ( अनेकाः ) मया कार्याः ।

विश्वामित्रः—( वशिष्ठं प्रति ) महर्षे नमस्ते ।

वशिष्ठः—

तपसो ब्रह्मतां लब्ध्वा त्वया लब्धा महार्हणा ॥
प्रतिप्रणतिरेषा मे गृह्यतां मनसा कृता ॥५॥

उपविश्यताम् । (विश्वामित्र उपविशति)

कुमाराः—सावित्रा वयमाभिवादयामहे भगवन्तम् ।
( पादौ स्पृशन्ति ततः सर्वे विश्वामित्रं प्रणमन्ति )

विश्वामित्रः—अप्रतिरथा दीर्घायुषो लोकप्रणय-भाजो भूयास्त । अन्येषां भद्रमस्तु । सर्वं उपविशन्तु । (सर्व उपविशन्ति)

राजा—अपि निष्प्रत्यूहास्तपःक्रियाः ।

विश्वामित्रः—

यथा पौरा धर्मपराः सुखिनोऽत्र नृपे त्वयि ॥
तथा तपोवनेऽस्माकं निष्प्रत्यूहास्तपःक्रियाः ॥६॥

वशिष्ठः—

स्वधर्मं रक्षति नृपे कुतोस्त्वकुशलं नृणाम् ॥
निर्वाते दीपनिर्वाणं सति स्नेहे कथं भवेत् ॥७॥

विश्वामित्रः—( सगर्वम् )

इन्द्रादयो राज्यमकण्टकं स्वं
कर्तुं क्षितीशान् वृणते सहायान् ॥
विना सहायं परिपूरयन्ति
तपस्विनः कर्म तपोमहिम्ना ॥८॥(4)

×( विचिन्त्य स्वगतम् ) स्वेष्टविरोधि मयाभिहितम् ।
( प्रकाशम् ) भवतु एवं वक्ष्ये ।
तपोविघ्नविघाताय त्वां याचिष्ये किमप्यहम् ॥

राजा—
आज्ञापनीयास्तु वयं भवद्भिर्ऋषिभिः सदा ॥९॥

विश्वामित्रः—( वशिष्ठं प्रति ) भगवन् अनन्तरब्रह्मकुल इमे महाराजदशरथस्य चत्वारः कुमारा विधिज्ञेन भवतैवोपनीता इति तु नैव प्रष्टव्यम् ।

---

(4) cf. " स्वाधीनकुशलाः सिद्धिमन्तः " Shakuntala.

+ इत आरभ्य नवमश्लोकान्तः पाठो नास्ति 'ख' पुस्तके ।

वशिष्ठः—वाढम् ।

विश्वामित्रः—कस्मादेते शास्त्राणि शस्त्राणि च गृह्णन्ति ।

वशिष्ठः—शास्त्राणि मत् ।

विश्वामित्रः—केषु शास्त्रेष्वेते प्रविष्टाः ।

वशिष्ठः—मन्त्रद्रष्टृत्वं विहाय सर्वा विद्यास्तीर्णा एतैः।

विश्वामित्रः—किन्त्वलोकसामान्यमिदं नाम यदीषत्प्राप्तयौवना एते कुमाराः सर्वा विद्यास्तीर्णवन्तः । भवत एवैष विधिमहिमा भवेत् ।

वशिष्ठः—गृह्णाति दीपस्य शिखां गुणाढ्या ।
स्निग्धा च वर्तिर्न तु पङ्कपिण्डः ॥
गृह्णाति विद्याश्च गुरोस्तथैव ।
धियो गुणैः स्नेहभरश्च× शिष्यः ॥१०॥

विश्वामित्रः—बहूनि शास्त्राण्यनुभवज्ञेयानि प्रासाद एव निवसद्भिः कुमारैः श्रुतमात्राणि

× स्निग्धतया 'ख'

कथं ज्ञातानि स्युः ।

वशिष्ठः—

श्रव्यं गुरोर्वचः शुद्धं ज्ञातव्यं मननेन तत् ।
एष पन्था सर्वशास्त्रग्रहणाय× सनातनः ॥११॥

विश्वामित्रः—कदापि केनापि परीक्षिता इमे । यतः—
स्वत्वेन गुरवः स्निग्धान् शिष्यान् ज्ञानवतो विदुः ॥
प्रणये दृश्यते सर्वैर्गुणवत्ता हि सर्वदा ॥१२॥

वशिष्ठः—कोऽन्यो भवत एतान् परीक्षितुं शक्नुयात् । (कुमारान् प्रति) दीर्घायुषः, यद्भगवान् विश्वामित्रः पृच्छति तद्यथाधीतं तस्मै ब्रूत ।

कुमाराः—यथा गुरव आज्ञापयन्ति

विश्वामित्रः—कुमाराः किमध्यापिता यूयमप्रतिमेन शास्त्रविदा गुरुणा भगवता वशिष्ठेन ।

रामः—(उत्थाय प्रणम्य च) सर्वतः पूर्वं गुरुषु विनयः । वयस्येषु प्रणयः । दीनेषु च दया ।

---

× ग्रहणस्य 'ख'

शत्रोर्निर्भयत्वम्[5] । ततश्च भगवानस्मानध्यापयच्चतुरो वेदान् ससूत्रार्थसङ्ग्रहं व्याकरणम्, पदनिर्वचनमार्षम्, ग्रहचारम्, पतञ्जलेर्योगशास्त्रम्, मानवमाचारशास्त्रम्,[6] चतुर्विंशतिव्यवहारनिर्णयं वाशिष्ठं राजधर्मशास्त्रम्, मेधातिथेर्न्यायशास्त्रम्, काशकृत्स्नं मीमांसाशास्त्र[7] मित्यन्यान्यप्युपयोगीनि शास्त्राणि ततो गजाश्वरत्नपरीक्षाः शकुनज्ञानं काव्यकलाश्च । वत्सैः सर्वास्ता विद्या ज्ञाता अहमपि कतिपयास्ताः श्रुताः स्मरामि ।

भरतलक्ष्मणशत्रुघ्नाः—अहो महानुभावत्वमार्यस्य—

+पश्यन्त्युत्कर्षभरितानार्याः परगुणांल्लघून् ॥

---

(5) शत्रुं विलोक्य निर्भयत्वमित्यर्थः । 'ल्यब्लोपे—०' इति पञ्चमी ।

(6) See foot note 10 Act 2

(7) काशकृत्स्नप्रोक्ता मीमांसा पातञ्जले महाभाष्ये बहुत्राभिहिता । यथा— ( ४।१।१ ) । + वदन्ति 'ख' ।

लघून्वदन्ति सततं स्वगुणान्महतस्तथा(8)॥१३॥

विश्वामित्रः—सन्तुष्यामः । अथ शस्त्रागमं को ग्राहयति वः ।

लक्ष्मणः—( रामं प्रति ) आर्य क्षन्तव्यं मम बालचापलम् । वक्तुमनुज्ञातोऽत्र भवेयम् ।

रामः—यथा वत्साय रोचते ।

लक्ष्मणः—(विश्वामित्रं प्रति) भगवन् ।

+आर्यो भ्राता वेत्ति सर्वागमान्नः ।
ज्येष्ठः श्रेष्ठः सर्वशास्त्रास्त्रविच्च ॥
किंचिन्नो तद्यन्न वेदैष शास्त्रे ।
कस्याप्यस्त्रे या न शक्तिस्तु सास्य ॥१४॥

---

(8) cf. " परगुणपरमाणून्पर्वतीकृत्य नित्यम् ।
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ "
Bhartrihari.
" विवरीतुमथात्मनो गुणान् ।
भृशमाकौशलमार्यचेतसाम् ॥ "
Shishupalavadha, 16, 30,

+ एष ' ख ' ।

शस्त्रास्त्रविद्या निखिला गृहीता-
ऽस्माभिर्महाराजपदप्रसादात् ॥
नित्यं च तस्या गुणनं करोति ।
बलाधिकारी विजयः[9] प्रतीतः ॥१५॥

विश्वामित्रः—

शास्त्रं शस्त्रं ज्ञेयमस्तीह यद्यत् ।
सर्वं ज्ञातं केन तत्स्यान्नरेण ॥
+श्रुत्वा वाक्यं कुम्भजोऽपात्समुद्रम् ।
दृष्ट्वा कार्यो निर्णयो नीरराशिम् ॥१५॥

(9) अत्र विजयो बलाधिकारीत्युक्तः । किन्तु वाल्मीकीये रामायणे राज्ञो दशरथस्याष्टसु—अमात्येषु तस्य नामोक्तम्—॥ यथा—
" अष्टौ बभूवुर्नृपतेस्तस्यामात्या यशस्विनः ॥
शुचयश्चानुरक्ताश्च राजकृत्येषु नित्यशः ॥२॥
धृष्टिर्जयन्तो विजयः सिद्धार्थो ह्यर्थसाधकः ॥
अशोको मन्त्रपालश्च सुमन्त्रश्चाष्टमोऽभवत् ॥३॥ "
बालकाण्डे द्वितीयसर्गे ॥

+ श्रव्यं 'स्व'

तथापि वत्स ते रामे भक्तिर्या तां स्तवाम्यहम् ।
स्नेहो भक्तिः स्वता चैव यत्र स्युस्तत्र वै गुणाः ॥१६॥

अथ शास्त्रशस्त्रव्यवहारानुभवः कथं क्व च क्रियते ।

यतः—अनुभवेन विनाधिगतं श्रुतम् ।
भवति नैव नृणामुपकारकम् ॥
दधनि वर्तत एव हविः पुनः ।
न मथनेन विना तदवाप्यते ॥१७॥

विदूषकः—मह उण दही रोअदि । दहिम्मि भक्खिदे ताह घिअं भक्खिदं भोदि ज्जेव (मह्यं पुनर्दधि रोचते । दध्नि भक्षिते तस्य घृतं भक्षितं भवत्येव) ।

रामः—रूपं द्रव्यं वास्ति वस्त्वित्यजस्रम्(10) ।
वाक्ये शक्तिर्वा पदेऽन्यच्च सर्वम्(11) ॥

---

(10) अयं राद्धान्तः पूर्वेषां वैयाकरणानां विचार्यमाणतामापत् । तथा च पातञ्जले महाभाष्ये— "किं पुनराकृतिः पदार्थ आहोस्विद्द्रव्यम् ।" इत्यादि ।

(11) अयं स्फोटविचारः । वाक्यपदीयमञ्जूषादिषु विवृतः ॥

वादं कुर्मो मित्रभूयं विनेत्रा[12]।
तेनास्माकं शास्त्रमेति प्रकाशम् ॥१८॥

अपि च—चलन्ति पत्राणि महीरुहस्य ।
विदृध्वा रजः[13] कृत्य शिला विशालाः ॥
दग्ध्वा तरून् शस्त्रमथास्त्रमेवम् ।
कुर्मोऽनुभूतं निकषा पुरं स्वाम ॥१९॥

विश्वामित्रः—
यथा सविनया स्पष्टा प्रगल्भा च सरस्वती ॥
तथा शास्त्राणि वः सन्ति[14] ज्ञातानीति न संशये २०
किन्तु वः शस्त्रवेदस्य नेयमभ्यासपद्धतिः ॥
अशस्त्रद्रुदले विद्धे केव स्याद्धन्विता स्तुता ॥२१॥

विदूषकः—णूणं रुक्खपत्तेसुं विद्धेसुं किं भवे । जइ सुक्खरुक्खसाहा भग्गा भवे ता महाणसलाहस्स सुक्खं अग्गिकट्ठं लद्धं भवे

(12) बिनेत्रा गुरुणेत्यर्थः ।

(13) अत्र रजः शब्दस्यार्षा गतिसंज्ञा मन्तव्या ।

(14) सन्तीति शत्रन्तस्य क्लीवस्य प्रथमाबहुवचनमाभाति ।

(नूनं वृक्षपत्रेषु विद्रेषु किं भवेत् । यदि शुष्कवृक्षशाखा भग्ना भवेत्तर्हि महानसलाभाय शुष्कमग्निकाष्टं लब्धं भवेत्) ।

राजा—अवितथमाह भगवान् विश्वामित्रः । अतएवाहं कदापि मृगयायै कुमारान्वनं नेष्यामि ।

विश्वामित्रः—

वन्याः केसरिणो गजाश्च महिषा ऋक्षा मृगाश्चेतरे+।
किं कुर्वन्ति नृणामनिष्टमबला ये नैव ते शात्रवः॥

राजा—तेपि गवादीन् शस्यानि च हिंसन्ति ।

विश्वामित्रः—

ते दण्ड्या× भवतेह किन्तु बलिनो धर्मप्रजापीडनम् ।
कुर्वन्तो विविधास्त्रवेदकुशला ये तान्पुनर्हन्तु कः २२
प्रकृतीस्ते पीडयन्ति धर्मं लुम्पन्ति* ये सताम् ॥
महाबलान् शस्त्रवतस्ताञ्जानास्यसुरान्न किम् ॥२३॥

---

+ श्चापरे 'ख' । × दम्याः 'ख' । * विघ्नन्ति 'ख' ।

ततश्च—

मृगयायै वनं गत्वा त्वया सह नृपोत्तम ॥
कथं ज्ञास्यन्ति तैर्युद्धं किमस्तीति सुतास्तव ॥२४॥

राजा—

आह्वयेयुर्नियुद्धाय यदि मां ते महाबलाः ॥
ममाग्रे पीडयेयुर्नॄंस्तान् हन्यां समरे लघु ॥२५॥

विश्वामित्रः—

निमील्य चक्षुषी स्थित्वा दृष्टाः स्युः पापिनः कथम् ॥
आगच्छेयुः कथं योद्धुं न रुद्धाः पापकर्मणः ॥२६॥

राजा—ग्रामवासाः कृषीवलाः गोपाला वणिजः सार्थवाहा न किमपि तेषामसुराणां कृत्यं ज्ञापयन्ति ।

विश्वामित्रः— नान्नधनलुब्धास्तेऽसुराः । न क्षेत्राजीवान्वणिजो वा कदर्थयन्ति । तपोवनेषु विघ्नन्ति यज्ञांस्तापसानाम् ॥

राजा—नर्षिभिर्न तापसैरहं किमप्येतज्ज्ञापितः ।

विश्वामित्रः—तापसा ऋषयश्च स्वतपोरक्षायै स्वयं क्षत्रियान् साहाय्यं न याचन्ते ।

राजा—अयाचितसाहाय्येन मया कथं तेषां तपोवैरिणो हताः स्युरज्ञातत्वात् ॥

विश्वामित्रः—

नित्यं हन्ति (15)तमौघमुष्णकिरणः को याचते तत्तु तम् ।
वातुं प्रार्थयते जनो न हि जगत्प्राणं सदा वाति सः ॥

---

(15) तमौघशब्दे च्युतसंस्कारतादोष इति कैश्चिन्मतम् । कैश्चित्तु व्याकरणाशुद्धिरेव मता । प्रतिमानाटकेऽपि दृश्यते तमौघशब्दः (Act. 7 10) । अहं तु नैनत्पदमशुद्धं न चात्र च्युतसंस्कारत्वं मन्ये । किन्त्व-प्रयुक्तत्वमत्र वर्तते । अन्धकारार्थे तमः शब्दः सकारान्त एव प्रायेण प्रयुक्तो दृश्यते सर्वत्र वाङ्मये किन्तु तमशब्दोऽकारान्तोऽपि विद्यत एव । तथा चामरकोषटीकायां भानुजिः—" (तमशब्दः) अदन्तः पुल्लिंगोऽपि ' स्वर्भानुस्तु तमो राहुः ' इति रत्नकोषामरमालयोर्दर्श-नात् । " । तमतमसोस्तु प्रकृतिरेकैव प्रत्ययावेव भिन्नौ । भानुजिमते ' तमु ग्लानौ (दि० प० से०) असुन् उणादिः " किन्तु नायं

शेषोऽप्रार्थित एव सन्ततमिमां धत्ते शिरो-
भिर्महीम् ।
पापापायमयाचिता नृपतयः कुर्वन्ति च
त्वादृशाः[16] ॥२७॥

अथ चैतन्न विस्मर्तव्यं क्षत्रचरेण मया भगवान्वशिष्ठोऽत्यर्थं कदर्थित इति सर्वैर्ज्ञायत एव सम्प्रति । तदा वशिष्ठेनर्षिणा भवादृशा अप्रतिरथा क्षत्राः शिष्याः साहाय्याय नाभ्यर्थिताः ।

---

धातुर्माधवीयधातुवृत्तौ सिद्धान्तकौमुद्यां च दृश्यते । आकृतिगणत्वा-द्दिवादेरस्योल्लेखः कृतो भवेद्भानुजिना । तमु काङ्क्षायाम् इत्येव धातु-रत्रास्तीति मन्यताम् । ततश्च पचाद्यचि तमः तमौ तमाः इत्यादीनि रूपाणि भविष्यन्ति ततश्च नात्राशुद्धिलवोऽपीति मन्तव्यम् ॥

(16) cf. "भानुः सकृद्युक्ततुरङ्ग एव ।
रात्रिन्दिवं गन्धवहः प्रयाति ॥
बिभर्ति शेषः सततं धरित्रीम् ।
षष्ठांशवृत्तेरपि धर्म एषः ॥" Shakuntala.

See also the note 15 Act. 2.

राजा—शापेन कथमृषयस्ते न निवारयन्ति पापानां कर्म ।

विश्वामित्रः—शप्तुः सुकृतं क्षीयते । ततो न शपन्ते तापसाः प्रायेण ।

दुर्दान्तपापपरनाशनमुग्रदण्ड ।
शापैर्भवेद्यदि+ तपस्विजनस्य सर्वम् ॥
ब्रूहि त्वमेव फलमस्य तवोरुकीर्तेः ।
शौर्यस्य पार्थिवपदस्य च केन वाच्यम् ॥२८॥

राजा—ह्रेपितोस्म्यत्र भवता । सम्प्रत्याज्ञापयतु भवान् किं मया कर्तव्यम् ।

विश्वामित्रः—एकमिदं द्वयं विज्ञापयामि ।

राजा—किं तद्द्वयमिति शीघ्रमाज्ञापयतु भवान् ।

विश्वामित्रः—कोपि रामं गुणपौरुषवयोज्येष्ठं कुमारं दिव्यास्त्राणि ज्ञापयेत् ।

राजा—यावन्ति दिव्यास्त्राणि मया गृहीतानि

+ इथ 'ख'

तावन्ति कुमारेभ्यो दत्तानि । रामश्च तानि सम्यक् प्रयुङ्क्ते । द्वे अस्त्रे मया श्रुते नाधिगते च ।

विश्वामित्रः—अपि ते महार्हे ।

राजा—बाढम् । जृम्भकास्त्रं ब्रह्मास्त्रं च ।

विश्वामित्रः—ब्रह्मास्त्रवित्तमोऽत्र भगवान् वशिष्ठः ।

वशिष्ठः—सर्वास्त्रसंहारं तेन कर्तुं शक्नोमि न च तत् प्रयोक्तुम् ।

विश्वामित्रः—ब्रह्मत्वमवाप्योभयं तस्य जानामि ।

राजा—जृम्भकास्त्रविदपि भवान् ।

विश्वामित्रः—बाढम् ।

राजा—तदत्र कियन्तमपि कालं स्थित्वा कुमारास्ते अस्त्रे अध्यापनीयाः ।

विश्वामित्रः—विरुद्धक्रममेतत्[×] ।

राजा—कथमिव ।

---

× विरुद्धमेतत् 'ख'

विश्वामित्रः—

अर्थी याति गृहं दातुर्न दातार्थिगृहं पुनः ॥
तृषार्तो याति सरितं न सरित्तृषितं नरम् ॥२९॥

राजा—अस्माकं गृहं तु भवतः स्वमेव । वयं प्रणतिभिर्भवन्तमत्र रोत्स्यामहे ।

विश्वामित्रः—नानाव्यवहाराकुलेषु राज्ञां वासवेश्मसु त्यक्तप्रासादनिवासा मादृशा वन्यफलाशिनो व्रतपरम्परासिता ब्रह्मविचारनिहित मनसो द्वित्राण्येवाहानि कथमपि स्थातुं शक्नुवन्ति । गृहस्थानां वेश्मानि खलु विविधव्यापारैस्तपोब्रह्मपराणां क्रियासु नैकान्तसुखमावहन्ति । स्वायत्तोटजेषु निर्जनेष्वपि वसतां तापसानां परिचर्या गृहस्थैर्न कर्तुं प्रभूयते । तापसान्न राजसम्पद्वक्तुं शक्नोति ।

राजा—भवदिष्टं किमप्यत्र न परिहास्यते । यतः

वयं पुत्रैर्भृत्यैः सचिवबलपैश्चापि भगवन् ।[17]
पृथुः प्रासादोऽयं प्रियमुपवनं वाहनगणः ॥
धनं कोषे यच्चान्यदपि मम मूर्धा परिणतः ।
न रोद्धुं शक्तं तत्कमपि समयं त्वामुरुदयम् ॥३०॥

विश्वामित्रः—
रुद्धस्वेदं मुनिमनो वीरपाणिं [18]रमारुचिम् ।
बलवित्तादिसम्पत्त्या न बद्धुं कोपि शक्नुयात् ॥३१॥

वशिष्ठः—युक्तिज्ञास्तत्सर्वं बध्नन्त्येव—
गन्धाश्मा [19]चपलं रुन्धे भक्तिर्मुनिमनः शुभा ।
प्रणतिर्वीरपाणिं च दाक्षिण्यं रमणीरुचिम् ॥३२॥

विश्वामित्रः—किन्तु प्रकृतेः प्रासादवासो न गुणमावक्ष्यति । यतो देशः कालो पात्रं च वस्तुगुणविकासकारणानि यतः—

---

(17) cf. "एते वयममी दाराः कन्येयं कुलजीवितम् ॥
ब्रूत येनात्र वः कार्यमनास्था बाह्यवस्तुषु ॥"
Kumarasambhava.

(18) अत्र रमणीवाचको रमाशब्दः । (19) चपलं पारदम् ।

विकसति सरसि सरोजम् ।
मलयाद्रौ चन्दनं भाति[20] ॥
एवं खलु वस्तूनि ।
वर्धन्ते निजस्थानेषु ॥ ३३ ॥

अपि च—फुल्लति मधुनि पलाशो
नृत्यति वर्षासु बर्हिणो भूयः ॥
कूजति शरदि मरालः ।
काले सर्वं गुणं धत्ते ॥ ३४ ॥

राजा—तर्हि कुमारा इमे द्वे अस्त्रे अज्ञातवै-वाहमिव स्थास्यन्ति रणेषु ।

विश्वामित्रः—नैवं यथा भवानाह ।

राजा—कथं तर्हि ।

विश्वामित्रः—यदि मम याच्ञा मोघा न स्या-त्किमपि त्वां याचे ।

(20) तत्रैवाधिकं वृद्धिमत एव शोभां भजतीत्यर्थः ।

राजा—

यदस्ति मम सर्वमस्तु तव तच्चरं वाऽचरम् ।
न वस्तु निजमत्र कोपि मनुजः परं याचते ॥
गृहाण यदभीप्सितं तव सखे विनैवार्थनाम् ।
धिगस्तु तमवेत्य योर्थितमरं न दत्ते मुदा[21] ॥३५॥
यियाचिषितमेवं त्वं यदि नैव वदेर्लघु ॥
आरोपितं यत्कार्पण्यं त्वया मयि तदर्दति[22]॥३६॥

विश्वामित्रः—भवतु यद्याचे तद्गृहीत्वा शीघ्रं वनं यामि ।

राजा—आज्ञापयतु भवान्

विश्वामित्रः—रामं याचे–

राजा—किमर्थं—

(21) " तं धिगस्तु कलयन्नपि वाञ्छाम् ।
अर्थिवागवसरं सहते यः ॥ "
(नैषधीयचरिते ५। ८३)

(22) दुखं करोतित्यर्थः । धातूनामनेकार्थत्वात् ।

विश्वामित्रः--विविदिषति फलं* नार्थितो दातुकामः॥

राजा—तद्वक्तव्यं धनादेः+—

विश्वामित्रः—न हि धनमृषयो मादृशाः प्रार्थयन्ते॥

राजा—रामस्त्वात्मैव मेऽयं—

विश्वामित्रः—भवति हि महतां क्वापि नात्माप्यदेयः॥

राजा—रामं मां चाप्यरण्यं नय—

विश्वामित्रः—स इह तवान्यो निषेधप्रकारः॥३७॥

राजा—विनैव कारणं रामं वनं प्रेष्य त्वया सह॥

कथं जीवामि जरसा परिभूतो गृहे वसन्॥३८॥

विश्वामित्रः—विनैव कारणमिति न वक्तुमुचितम्॥

राजा—ज्ञापयतु तर्हि भवान्।

विश्वामित्रः—अहं दशदिनसमाप्यं यज्ञं करिष्ये।

वसिष्ठः—कः कालोऽयं श्रौतानां यज्ञानाम्।

---

*'विवदिषति फले' 'ख'

+'धनादौ' 'ख'

÷'श्रौतानां' नास्ति 'ख' पुस्तके।

विश्वामित्रः—

यज्ञं दानं तपश्चैव कार्यं सर्वेण सर्वदा ।
कालस्तु विहितस्तेभ्यो सदा ये कर्त्तुमक्षमाः ॥३१॥

ततश्च विना शस्त्रज्ञसहायं न तं कर्त्तुं पारयामि । सर्वशस्त्रविद्रामो यज्ञमविघ्नं मे करिष्यति ।

राजा—कुतो विघ्नानां सम्भवः ।

विश्वामित्रः—सुबाहुमारीचप्रमुखा राक्षसा नित्यं मम यज्ञविघ्नकारिणः ।

राजा—

अहं तर्हि तान् हन्तुं ससैन्यो भवन्तमनुयामि ।

विश्वामित्रः—राम एव तच्छक्नोति नान्यः ।

राजा—रक्षांसि निर्दयमनांसि महाबलानि ।
रामस्य रागपदवी मृदु चैव चेतः[23] ॥

---

(23) नाटयशास्त्रटीकायामभिनवभारत्यामभिनवगुप्तेन भासस्य पद्यमेकमुद्धृतम् । तस्य द्वितीयः पादोऽस्य पद्यस्य द्वितीयपादेन संवदति तद्यथा—

सिद्धं कथं भवतु तेऽध्वररक्षणं तत् ।
शक्या हि नैव वनजेन वनाग्निशान्तिः ॥४०॥

विश्वामित्रः—

यथा बालोऽर्कः स्यात् त्रिभुवनतमोन्मूलनपटु-(24)*
र्हरेः पोतः कुर्यात्सकलमृगभीतिं च विपिने ॥
तथैवायं रामोऽसुरद्वकृशानुः प्रभविता ।
वयो नैवापेक्ष्यं भवति महतामिद्धमहसाम् ॥४१॥

अथ च—

ये द्वे अस्त्रे पूर्वमुक्ते ते रामस्तत्र लप्स्यते ।
यज्ञान्ते दीयते प्रीत्या यत्तस्यास्ति फलं महत् ॥४२॥

राजा—अत्र भगवन्तं गुरुं प्रष्टुमिच्छामि ।(वशिष्ठं प्रति)

भगवन् तत्कथं कुर्यां यन्मयास्ति प्रतिश्रुतम् ।
पुत्रत्यागो धर्महानिरुभयं दुःसहं मम ॥४३॥

---

"त्रेतायुगं ............ तद्धि न मैथिली सा ।
रामस्य रागपदवी मृदु चास्य चेतः ॥"

(24) तमशब्दोऽत्राकारान्तः । See note 15. Act 4.

* 'त्रिभुवनतमोनाशनपटुः' 'ख'

विश्वामित्रः—

राजसिंह प्रतिज्ञाहानिः पातकम् । मया सह रामं प्रेष्य न ते पुत्रत्यागो भवति । यतः—

यथा तव प्रियो रामो मम प्रियतरस्तथा ॥
अधीत्यास्त्राणि विद्याश्च त्वामुपैष्यति सत्वरम् ॥४४

वशिष्ठः—विश्वामित्रेण सह गमने नाहं रामस्य किमप्यनिष्टं पश्यामि । त्वया च प्रतिज्ञा न हातव्या । तद्देहि रामम् ।

राजा—एवं भवतु (रामं प्रति सगद्गदम्) वत्स राम भगवन्तमनुगच्छ ।

रामः—(प्रणम्य) यथाज्ञापयति महाराजः ।

लक्ष्मणः—(उत्थाय) महाराज गुरो भगवन् अहमार्यमनुगन्तुमिच्छामि ।

स्तन्यं पीतं क्रीडितं मातुरग्रे ।
लब्धा चाशीर्मन्त्रपूर्वं च विद्याः ॥

एतत्सर्वं सार्धमार्येण जातम् ।
आगः किं मे यद्वनं याति सैकः(26)॥४५॥

विश्वामित्रः—रामं विना क्षणमपीह न तिष्ठसीति ।
जानामि तत्त्वमनुयाहि तमेधि वीरः

भरतशत्रुघ्नौ—आवां विहाय कथमद्य वनं प्रयात× ।
एतौ ततश्च वनमेव लघु व्रजावः ॥४६॥

राजा—(सास्रम्) किं सर्वे कुमारा यास्यन्ति ।

वशिष्ठः—
विश्वामित्रेण साकं भो यातु रामः सलक्ष्मणः ।
इतरौ पितरं वृद्धं सेवेतामत्र सन्ततम् ॥४७॥

राजा—(चक्षुषी निमील्य) एवं भवतु । लक्ष्मणोऽपि यातु ।

रामलक्ष्मणौ—किमधुनैव भगवता सह गन्तव्यम् ।

विदूषकः—(अपवार्य राजानं प्रति) संपदं जेव्व गच्छदु अअं दिग्घकुच्चो । जइ अअं चिट्ठदि रण्णीआओ

(26) 'सोचिलोपे चेत्पादपूरणम्' (पा० ६।१।१३४) इति सूत्रेण सोर्लोपः । × 'प्रयातौ' 'ख'

वा मं वा णेदि । जइ रण्णीआओ णेदि ता एत्थ को मह मोदआइं दइस्सदि । जइ मं णेदि रक्खसेहिं भक्खिदो होमि (साम्प्रतमेव गच्छत्वयं दीर्घकूर्चः । यद्ययं तिष्ठति राज्ञीर्वा मां वा नयति । यदि राज्ञीर्नयति तदत्र को मह्यं मोदकान् दास्यति । यदि मां नयति राक्षसैर्भक्षितो भवामि) ।

विश्वामित्रः—आपृच्छ्य मातॄः सुहृदश्च कृत्वा ।
प्रस्थानकालोचितमङ्गलानि ॥
यास्याव आधाय हृदि प्रसादम् ।
(26)कल्ये वनं त्त्वरयालमद्य ॥४६॥

रामलक्ष्मणौ—यथा भगवन्तः प्रसीदन्ति ।

राजा—अमात्य विश्राम्यन्त्विदानीं सर्वे । अहमपि पर्याकुलोऽन्तःपुरं गच्छामि । विजयेअन्तःपुरमार्गमादेशय ।

प्रतीहारी—इदो इदो महाराओ (इत इतो महाराजः)

(विश्वामित्रं विहाय सर्वे निष्क्रान्ताः)

---

(26) कल्ये=श्वः प्रातरित्यर्थः ।

विश्वामित्रः—प्रार्थितमवाप्यातीव प्रसन्नमद्य मे मनः

रामं कृत्वास्त्रप्रयोगेऽद्वितीयम् ।
तेनोद्धूतान्(27) राक्षसान् घातयित्वा ॥
मन्दं दृष्ट्वा रावणस्य प्रभावम् ।
प्रीतिं लब्धा जातकार्यं मनो मे ॥४८॥

(निष्क्रान्तः)

। इति चतुर्थोऽङ्कः ।



(27) उद्धूतानुद्धतानित्यर्थः ।

## ॥ पञ्चमोऽङ्कः ॥

(ततः प्रविशन्ति त्रय ऋषिशिष्याः)

एकः—

विश्वामित्रस्य विप्रर्षेः पूर्णो जातोऽद्य यः क्रतुः।
फलं तस्यैतदभयाः संचरामस्तपोवने ॥ १ ॥

द्वितीयः—सखे शालङ्कायन शुभमेतद्यज्ञफलं भगवतः। यतोऽद्य प्रतिपद्दिनं निर्भया वनाटनेन गमयामः

शालङ्कायनः—गालव अत्र तपोवने मारीचाद्या राक्षसा विश्वामित्रं विहाय नान्यानपीडयन्। तथापि तत्पीडनमाशङ्कमाना वयं वनं नागाहिष्महि।

तृतीयः—किं णिमितं वीसामित्तं जेव रक्खसाओ+ पीडीआ ण अण्णाओ इसीओ
(किं निमित्तं विश्वामित्रमेव राक्षसा अपीडयन्नान्यानृषीन्)

गालवः—ताम्यायन, विश्वामित्रः पूर्वं क्षत्र

+ 'रक्खसा' 'ख'

आस । तपसा ब्रह्मर्षित्वमगमत् । ब्राह्मणास्तस्य भूयस्तपो न सहन्ते ।

ताम्यायनः—जइ बम्हणाओ× तस्स तवो ण सहेंदि रक्खसाओ* तस्स तवो किं णिमित्तं विग्घंदि । (यदि ब्राह्मणास्तस्य तपो न सहन्ते राक्षसास्तस्य तपः किं निमित्तं विघ्नन्ति) ।

गालवः—ते राक्षसराजेन रावणेन विश्वामित्रतपोविघातााय प्रेषिताः ।

ताम्यायनः—रावणो वि वीसामित्तं जेव्व कधं कदत्थेदि (रावणोऽपि विश्वामित्रमेव कथं कदर्थयति)

गालवः—विश्वामित्रो ब्रह्मत्वे कियत्स्थास्यतीति ।

ताम्यायनः—कथं विअ । (कथमिव)

गालवः—यदि कदर्थितो विश्वामित्रः कुप्येत(1) तदा तस्य शमप्रधानं ब्रह्मर्षित्वमुपहस्येत ।

ताम्यायनः—कधं सो ण सावेण रक्खसाओ णिवारेदि (कथं स न शापेन राक्षसान्निवारयति)

---

× बम्हणो 'ख' *'रक्खसा' 'ख' (एवमग्रे बहुत्र)

(1) अन्ययोग्यकर्मार्थं आत्मनेपदम् See note 12 Act 3.

गालवः—क्रोधेन विना शप्तुमशक्यम् ।

ताम्यायनः—बहुणो अण्णाओ इसीओ सवंदि ण अ तेसिं बम्हणत्तणं उवहसीअदि ।

(बहवोऽन्ये ऋषयः शपन्ते न च तेषां ब्राह्मणत्वमुपहस्यते)

गालवः—परंपराप्राप्तब्रह्मर्षित्वास्ते कुत्रापि मनाक् क्रुध्यन्तो न तथोपहस्यन्ते यथाऽचिर-प्राप्तब्रह्मर्षित्वो विश्वामित्र उपहस्येत । ततश्च तेन रामः सहायो वृतः ॥

ताम्यायनः—तह वि क्खत्तपोदसहाआ (?) पेक्खं तस्स तवो न बम्हणस्स विअ (तथापि क्षत्रपोतसहायापेक्षि तस्य (!) तपो न ब्राह्मणस्येव)

शालङ्कायनः—नैतत्तथा । यतः—

रामायास्त्राणि दिव्यानि दातुं तं मन्त्रवित्तमः ॥
आनैषीद्यज्ञरक्षां तु तु स व्याजीकृतवानृषिः ॥२॥
रामश्च—गत्या हरिं मुखरुचा* ऽब्जकमुष्णदीप्तिम्[2] ।
वाचासुधासर[3] मगाधतया समुद्रम् ॥

'*मुखरुचोदितमुष्ण' 'ख' (2) बालरविम् । (3) सरशब्दः सन्तानिकापर्यायः

रूपेणमन्मथ मलङ्घ्यतया हिमाद्रिम् ॥
शौर्येण वासवमगर्वमथो करोति ॥२ ॥
तपोवनमिहायातः स करोति तपोवनम्(4) ॥
भूयः साफल्यमस्माकमक्ष्णां वनसदां सदा ॥३॥

गालवः—अलोकसामान्यबलप्रभावोयम् । यतः—
पिधाय मायया रूपं योद्धुं तेनागमन्निशि ॥
रक्षांसि यानि तान्येको रामोहन्निति नः श्रुतम्॥४॥

अथ च—सुबाहुर्मारीचो दशमुखसपक्षावरुबलौ ।
सदा विश्वामित्रं तृणगणनया पर्यभवताम् ।
तयोरेकं रामो व्यसुमकृत बाणैरथ परम् ।
निरस्तं (5)मन्वस्त्रात्क्षुभितजलधौ मज्जति च सः
॥ ५ ॥

ताम्यायनः—तेण रक्खसी ताडआ हदा त्ति कहीअदि सच्चं (तेन राक्षसी ताडका हतेति कथ्यते सत्यम)

(4) तपसोऽवनं रक्षणमित्यर्थः । (5) मन्वस्त्रमुपयुज्येत्यर्थः रामायणे मानवास्त्रेण रामो मारीचं समुद्रे क्षिप्तवानित्युक्तम् ।

गालवः—बाढम् ।

लताया आदत्ते कुसुममपि यस्तत्र सदयः ।
वपुर्यस्य स्वेदं स्रवति सुरभि स्वैरगमने ॥
शरैर्भिन्नाङ्गां तां व्यधित स च मारीचजननीम् ।
खरात्रक्षोघातानरुणदुरसा चाप्रचलितः ॥ ६ ॥
अतः—मृदुत्वं च खरत्वं च परमं दधतो हृदि
विचित्रैश्चरितैरेवं महान्तो गूढभावकाः ॥७॥

शालङ्कायनः—न केवलं दयया शौर्येण च स श्लाघ्यः किन्तु सदागमा अप्यस्माकं सर्वेषामधीतमतिशयन्ति[1] ऋषयस्तस्य श्रुतवत्त्वं स्तुवन्ति ।

ताम्यायनः—किं एत्थ थोदव्वं । सो रण्णो पुत्तो । सआ पच्छभोअणभोत्ता दासेहिं सेविदो माआपिअरेहिं लालिदो वेज्जेहिं किदस्सत्थोवचारो अण्णेएहिं गुरूहिं पेमेण अज्झाइदो । ण तं चित्तं जइ सो बहुविज्जो । अम्हे उण रोए

(1) अतिशयशब्दादाचारक्विप् ।

वि णिच्चं गुरुणो सेवामो । भिक्खां मग्गामो । जं जाव जादिसं लद्धं भोदि तेण जीवामो गुरुहिन्तो भाआमो कडे सेज्जामो अप्पं अज्झअणकालं लहामो । ता अम्हाणं अप्पा वि विज्जा तस्स बहुविज्जत्तणादो सिरिट्ठा । इसीओ तस्स विज्जं ण थुवंदि राअपुत्तत्तणं थुवंदि ।

(किमत्र स्तोतव्यम् स राज्ञः पुत्रः । सदा पथ्यभोजनभोक्ता । दासैः सेवितः । मातापितृभ्यां लालितः । वैद्यैः कृतस्वस्थोपचारः । अनेकैर्गुरुभिः प्रेम्णोऽध्यापितः । न तच्चित्रं यदि स बहुविद्यः । वयं पुनारोगेपि नित्यं गुरून्सेवामहे । भिक्षां याचामहे । यद्यावद्यादृशं लब्धं भवति तेन जीवामः । गुरुभ्यो बिभिमः । कटे शयामहे । अल्पमध्ययनकालं लभामहे । तदस्माकमल्पापि विद्या तस्य बहुविद्यत्वाच्छ्रेष्ठा (प्रशस्यतरा) । ऋषयस्तस्य विद्यां न स्तुवन्ति राजपुत्रत्वं स्तुवन्ति)

गालवः—मूर्ख गुरवो +नाधिक्षेप्याः ।

ताम्यायनः—सच्चं वअणं ण अधिक्खेवो भोदि

(सत्यं वचनं नाधिक्षेपो भवति)

---

+'न परिवादमर्हन्ति' 'ख'

शालङ्कायनः—तथापि येन गुरूणां निन्दोद्भवे त्तादृशं वचनं सत्यमपि न वक्तव्यं न च श्रोतव्यम् । यतो गुरवो नाविचार्य किमपि कुर्वन्ति ।

ताम्यायनः—ता गुरुओ स्सअं लाहं× अवेक्खंदि ण गुणं (तद्गुरवः स्वकं लाभमपेक्षन्ते न गुणम्)

गालवः—मूर्ख तव वचने नास्तिक्यम्(2) । तन्न वयं तच्छृणुमः ।

---

× 'महापुरिसं..................सेवं' 'ख'

(2) नास्तिक्यशब्दो नास्तिकशब्दात्सिध्यति । नास्तिकशब्दश्चासत्तार्थनास्तिशब्दात् । "अस्ति नास्ति दिष्टं मतिः" (पा० ४।४।६०) इत्यनेन सूत्रेण ठकि कृते सिध्यति । असत्ता त्वत्र परलोकस्येति प्रकृतार्थम् दर्शयति महाभाष्ये पतञ्जलिः । ततश्च नास्तिक्यं तद्येन परलोकसत्ता प्रत्याख्यायते । योऽस्मिन्नेव जन्मनि समानानि कर्माणि दृष्ट्वा फलवैधर्म्यं पश्यन्ति तैः पूर्वजन्मकृतकर्मपक्तिरूपं तत्फल वैषम्यं मन्यताम् । ताम्यायनः क्रियमाणान्येव कर्माणि पश्यति पूर्वार्जितसुकर्मफलान्राजपुत्रादीनीर्ष्यति । पूर्वार्जितान्यनुमानगम्यानि कर्माणि न गणयति ततस्तस्य वचने नस्तिक्यमत्रोक्तम् ।

ताम्यायनः—सच्चं वअणं णिगहीदा णत्थिक्कं कहेंदि (सत्यं वचनं निगृहीता नास्तिक्यं कथयन्ति)

शालङ्कायनः—अबोधहतबुद्धयो न शाम्यन्ति हेतुभिः (विलोक्य) अहो रामलक्ष्मणाभ्यामनुगम्यमानो भगवान् विश्वामित्र इत एवाभिगच्छति।

गालवः—(दृष्ट्वा) सत्यम्। अद्य विश्वामित्रः

उभाभ्यां राजसूनुभ्यामन्वितो ब्रह्मधामवान्॥
आयाति मूर्त्तो मन्येऽयं वेदः श्रुततपोन्वितः॥९॥

(इति शुद्धविष्कम्भकः(3))

(ततः प्रविशति रामलक्ष्मणाभ्यां सह विश्वामित्रः)

---

(3) शुद्धविष्कम्भकलक्षणं यथा साहित्यदर्पणे—

"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः॥
संक्षिप्तार्थस्तुविष्कम्भ आदावङ्कस्य दर्शितः॥ ५५॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः॥
शुद्धः स्यात्सः..................................."॥ ५६॥
(परि० ६)

द्विवचनं बहुवचनस्याप्युवलक्षणम्।

विश्वामित्रः—वत्स राम लक्ष्मण—

विद्या अस्त्राणि मत्प्राप्य युवाभ्यां रक्षितः क्रतुः ॥
राक्षसेभ्यस्ततो जातं प्रसन्नं मम मानसम् ॥१०॥

अथ च—

उप्ते धान्ये हि सुक्षेत्रे मासाभ्यां शस्यमाप्यते ॥
दत्तमस्त्रं युवाभ्यां तु सद्यः प्रादात्फलं शुभम् ॥११॥

रामः—यन्मया भवदादिष्टं कृतं तदल्पमपि भवता बहु मतमिति प्रसन्निमेति मे मनः । गुरवो हि बालानुत्साहयितुं विकृता अपि तेषां कृतीः स्तुवन्ति ।

विश्वामित्रः—वीर त्वया प्रबलराक्षसघातमेतम् ।
कृत्वाऽधुना दशमुखस्य विरूपिता श्रीः ॥
आसीन्मयापि तदशक्यमहो महीय-
स्तेजस्तवासुरबलान्तकृतोऽद्य दृष्टम् ॥१२॥

रामः—भवत एव तपोमहिमाऽभवत् ।
यदसुरा विशिखैर्निहता मया ॥

दुरभिगम्यबला बलिभिः क्व ते ।
क्व शिशुरस्मि मितास्त्रगतिः पुनः ॥१३॥

अरुणेन तमो भिन्नमिति लोके निगद्यते(4) ।
किन्तु भास्करकर्मैतद्येनाग्रे निहितोऽरुणः ॥१४॥

विश्वामित्रः—वत्स नेदं तथा

रसाः सर्वे भूमौ मधुरलवणाद्यास्तु सततम् ।
ग्रहीतुं तान्सर्वान्प्रभवति न सर्वौषधिगणः ॥
यदिक्षौ माधुर्यं विकसति भुवस्तत्र महिमा ।
भवेत्तस्यैवायं न कटुतरुमातुश्च धरणेः ॥१५॥

अतोऽस्त्राणि मया यानि तुभ्यं दत्तानि तानि च ॥
महिमानं तवाश्रित्य प्राभूवन्नसुरक्षये ॥१६॥

---

(4) cf, " सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः ।
सम्भावनागुणमवेहि तमीश्वराणाम् ॥
किं वाऽभविष्यदरुणस्तमसां विभेत्ता ।
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् " ॥

Shakuntala VII. 4.

रामः—

भवतास्त्राणि दत्तानि लक्ष्मणस्तान्युपायुनक् ॥
तटस्थोपि स्थितस्तत्र यशःपात्रमहं कृतः (5) × ॥१७॥

लक्ष्मणः—भगवन्—

अस्मद्यशोहेतुरभूद्भवान्यः ।
स मन्यते नो बहुमल्पमाजिम् ॥
आर्यस्तु कृत्वा महतां सुराणाम् ।
नाशं न तं स्वं कृतमाह वीरः ॥१८॥

भवतु एवम्—

उभाभ्यामल्पमपि मे प्रशस्तं कर्म यच्छिशोः ॥
भवत्प्रेम न शौर्यं स्वं तन्मे मानप्रदं खलु+॥१९॥

---

(5) यद्यपि यज्ञपात्रप्रयोग एवोपपूर्वाद्युजेः परस्मैपदम् (पा० १।३।६४) पाणिनिमितम् । अत्र तु— अस्त्रप्रयोगेपि परस्मैपदं विहितम् । मन्त्रवदस्त्रप्रयोगो यज्ञपात्रप्रयोग इवेति प्रतीयमानत्वादुत्प्रेक्षा ।

× 'पात्रत्वमापितः' 'ख'

+ 'बहु' 'ख'

रामः—भगवतोक्तं रावणस्य श्रीर्विरूपितेति तत्कथं सुबाहौ हते मारीचे च दूरं क्षिप्ते सम्भवति।

विश्वामित्रः—वत्स विविधशस्त्रास्त्रभृतौ मायारूपौ महाबलौ तौ वैवस्वतक्षत्रशासितायां भुवि सेनानिवेशीकृततपोवनावत्रास्ताम्। तौ यो हनिष्यति तस्मान्मे भयसम्भव इति रावणस्यासीन्निश्चितम्। किन्तु सुबाहौ हते रावणश्रियो विरूपता तावती न यज्जीवन्नेव मारीचो दूरं क्षिप्तस्तेन तस्या पाणिरेखोदभवत्(6)।

रामः—स महाबल इति श्रूयते। तेनापि योद्धव्यं भविष्यति।

विश्वामित्रः—स नूनं महाबलः। ततश्च—

महाबलेषु दान्तेषु वीराणां त्वादृशां महः॥
महतीं सविता कीर्त्तिं लघौ दान्ते न वीरता॥२०
स त्वं च युद्धे वीरत्वं समये दर्शयिष्यथः॥
विरुद्धयोरेकमेव शिष्यते तेजसोः सतोः॥२१॥

(6) 'पतिघ्नी पाणिरेखा', (महाभाष्ये)।

रामः—कदापि न मया स दृष्टो न विप्रकृतश्च न च तेनाहं दृष्टो विप्रकृतश्च कथमावयोर्विरोधः।

विश्वामित्रः—आगः किं वारिदस्य ध्वनिमपि सहते
यन्मृगेन्द्रो न तस्य ।
कस्माद्धेतोः स एव द्विरदरिपुरिह
ख्यायतेरण्यराजः ॥
एवं वीरा महान्तः क्वचिदपि न
महोन्यस्य सोढुं समर्था-
स्तेषामेष स्वभावः कथमपि न
स तैर्जीवितैर्हीयते च(7) ॥ २२ ॥

---

(7)cf. "किमपेक्ष्य फलं पयोधरान् । ध्वनतः प्रार्थयते मृगाधिपः ॥
प्रकृतिः खलु सा महीयसः । सहते नान्यसमुन्नतिं यया ॥"
(भारविः २। २१)

"न तेजस्तेजस्वी प्रसृतमपरेषां विषहते ।
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ॥
मयूखैरश्रान्तं तपति यदि देवो दिनकरः ।
किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति" ॥
(उत्तररामचरिते ६। १४)

रामः—आवयोर्युद्धं भवितेति भगवतोक्तम् । किं मध्यस्थीकृत्य तद्भविष्यति । कतरश्च जेष्यति

विश्वामित्रः—

युवयोर्धर्मवैषम्यं किमप्युद्भाव्य कारणम् ॥

युद्धं करिष्यति त्वं च जयं प्राप्तासि निश्चितम् ॥२३॥

रामः—कथं धर्मवैषम्यम् ।

विश्वामित्रः—रावणो राक्षसाधिपः । इक्ष्वाकुवंश्या वर्णाश्रमाणां रक्षितारः । स ऋषिभ्योपराध्यति । यूयमृषिपूजापराः । स बलदृप्तो यूयं विनीताः । युस्मासु धर्मप्राधान्यम् तस्मिनस्वबलप्रकर्षप्राधान्यम् । स भ्रातृशत्रुर्यूयं सौभ्रात्रवन्तः । एतद्वैषम्यं युद्धमुद्भावयिष्यति । तस्य भावास्तं पराजितं त्वां च विजेतारं करिष्यन्ति ।

रामः—यदि तद्युद्धं भवेन्नूनं जयो मे तत्र भविष्यति यतः

आशीर्गुरूणां प्रणयः प्रजाना-
मस्त्राणि वो मन्त्रकृतामृषीणाम् ॥

साहायकं चालघु लक्ष्मणस्य ।
तत्सर्वमाप्त्वा न कथं जयः स्यात् ॥२४॥

विश्वामित्रः—

लक्ष्मणेन सहैव त्वं परमं लप्स्यसे जयम् ॥
यस्मिन्रणे युवां स्यातं तत्र कालोऽपि निर्बलः ॥२५॥

किन्तु तव रावणस्य च युद्धं बहुं कालमपेक्षते । कारणमनुत्पाद्य न योद्धुं संनद्धो भविष्यति रावणः । नयविनयज्ञे भवति न लघु(4) कारणमुत्पत्स्यते । सम्प्रति यत्कृतं भवता तेन परमा शान्तिर्न केवलं तपस्विसु किन्तु मृगपक्षिवृक्षलतासु चाजनि ॥

तथा च—पसन्ना निर्भया एते मुनीनां शिशवो वने ॥
क्रीडन्ति विहिते तेऽद्य रक्षोपाये महाबल ॥२६॥
प्रसन्नाः सरितश्चैता चलन्मीनमनोहराः ॥
तरङ्गहस्तैरिव या आह्वयन्ति च पश्य ताः ॥२७॥

(4) शीघ्रमल्पं वा ।

वृष्ट्येन्द्रोऽहरदुग्रतापमहरस्त्वं दैत्यविघ्नं वने ।
धान्यं प्रोप्तमगात्समृद्धि[+]ममला विद्यास्तथा मे त्वयि।
नैर्मल्यं सुखदं जलानि सरितां यातानि यत्साम्प्रतम्।
तन्मन्ये तव विक्रमेण [×]धरणेर्जाता प्रसक्तिः परा।२८।

रामः—अहो रामणीयता सम्प्रति तपोवनस्य—

शस्यानि वृक्षाः फलिनाः[*] सरांसि च ।
दृष्टानि पूर्वं नगरान्तिके मया ॥
तान्येव सानन्दमदृष्टपूर्ववत् ।
पश्यामि रम्याणि तपोवनेऽधुना ॥२९॥

विश्वामित्रः—नगरादिषु रम्यत्वं कृत्रिमं न च सर्वभोग्यं ततो न यथार्थम् । यतः—

आरामेषु महीभृतां क्षितिरुहा
यत्नेन संवर्धिताः ।

---

+ 'अभूत्समृद्ध' 'ख' × 'शरदो' 'ख' * 'फलिनः' 'ख'।

शैलूषा इव ते भजन्ति विहितां (9)
शोभां वृतिष्वासिताः (10) ॥
रुध्यन्ते न मृगा अपीह विपिने
पत्राद्यदन्तः पुनः ।
सर्वेऽरण्यसदो यथारुचि फलान्यादातु-
मीशाः स्वयम् ॥ ३० ॥

तथा चात्र—शस्यान्युदाराः क्षमिणः कृषीवलाः ।
क्षेत्रेत्तुमेतान्न मृगान्निरासते ॥
दूरे वसन्तो नगराच्च सन्ततम् ।
घ्णन्ति नान्नं लघुलब्धतोषिताः ॥३१॥

लक्ष्मणः—सम्यगाह भगवान् ।
यस्तुङ्गसौधेषु पुरेषु नित्यम् ।
कलाप्रधानानि सुखानि भुङ्क्ते॥
अस्पृष्टवैरस्य निसर्गजस्य ।
न वन्यसौख्यस्य सुखं स वेत्ति ॥ ३२ ॥

---

(9) कृत्रिमाम् । (10) स्थापिताः । यद्वा आ समन्तात् सिता बद्धाः । षिञ् बन्धने– अस्य निष्ठान्तं रूपम् ॥

पुरेषु कृत्रिमं सर्वं तत्समत्सरमाविलम् ॥
अत्र वास्तविकं प्रेम्णा रम्यं प्रकृतिशोभितम् ॥३३॥

रामः—बालार्कबिम्ब[11] सुषमं विमलं सरोम्भः ।
कान्तं च विष्णुपदमस्तसमस्तमेघम् ॥
नूनं निराशयमहामुनिचित्तकल्पे ।
रम्यश्रियो विनिमयं कुरुतोऽधुनैते ॥३४॥

विश्वामित्रः—इदमपि रम्यम् यथा—
काष्ठा आसन्मलिनवदनाः प्रोषिते भर्तरीव ।
मोदं याता गगनमणिना धूमयोनौ निरस्ते ॥
नद्यः स्वच्छाः विकचकमलप्रेक्षणा वीचिहस्तैः ।[12]
स्रस्तं रोधःपटमनलसा लब्धुकामा इवैताः ॥३५॥

रामः—अथ च
स्वच्छे सरस्ययमुदीर्णविकासिबिम्बः ।
चित्ते मुनेरिव चकास्ति नवो विवस्वान् ॥

(11) बिम्बशब्दोऽत्र प्रतिबिम्बपर्यायः ॥
(12) नदीषु कमलोत्पत्तिः कविसमयप्रसिद्धा ।

तीरेषु तस्य सरसो विहगाः प्रसन्नाः ।
हिंसादिदोषरहिता इव युक्तभावाः(13) ॥३६॥

लक्ष्मणः×—नूनं रमणीयमेतत्सरः ।
सरस्यगाधसलिले राजन्ते मानसौकसः ॥
रसपूर्णे कवेश्चित्ते नवा भावा इवोज्ज्वलाः ॥३७॥

रामः—सम्प्रति युक्तमेववेदम् ।
केकाभिर्यैः स्वागतं धूमयोनेः ।
कृत्वा च्छन्ने भास्करे नृत्तमुत्कैः ॥
मेघापाये दीप्यमाने दिनेशे ।
निष्पक्षत्वं न्याय्यमेवाद्य तेषाम् ॥३८॥

विश्वामित्रः—वत्सौ पश्यतं भूयः शरदः शोभाम्
मग्नोऽभवत्प्रबलशत्रुघनान्धकारे ।
निर्भर्त्सितः स्तनितचञ्चलदीप्तिमिश्च ॥
सोद्योदितो विमलविष्णुपदे विराजन् ।
काशैः शरत्त्वमिह वीजयति ग्रहेशम् ॥३९॥

---

(13) युक्तस्य योगिनो भावाः । × इयं लक्ष्मणोक्तिर्नास्ति 'ख' पुस्तके ।

अथ च—निर्वारिदे व्योम्नि विराजमानम् ।
भूपं जितारं स्वनृपासनस्थम् + ॥
प्रजा इवोत्काः सरितः सरस्यः ।
नेत्रैरिवाब्जैरवलोकयन्ति ॥४०॥

एवं युवाभ्यां तपोवनस्य शरत्सुषमा साक्षात्कृता । अतिरम्यत्वात्प्रत्यहं नवेवैषा । किन्तु तपोवनान्तिके वन्यघोषा अपि द्रष्टव्याः । नेमे नगरान्तिकघोषवद्व्यवहारभूमयः । अत्रारण्यमृगसमानवृत्तिर्ग्राम्यजनोऽदर्शितधर्मोपि न धर्ममतिक्रामति । न कलहो न परस्वेच्छा । सर्वदातिथ्यपरा ग्राम्यस्त्रियः । अपकारान् विस्मरन्ति सर्वे । दृष्ट्वा त्वामभिनन्दिष्यन्ति ।

रामः—अपरिहार्यं तादृशानामवलोकनम् ।

लक्ष्मणः—वनशोभाकृष्टमनोदेहा वयं दूरं समायाताः । सम्प्रति निसर्गजार्जवानुकृततप-

+ स्वमिवासनस्थम् 'ख'

स्विचरितान् भगवता वर्णितान् प्रत्यक्षान् कर्त्तुं गच्छामः ॥

(सर्वे परिक्रामन्ति)

लक्ष्मणः—(पश्यन्) आर्य पश्य ।

शस्यभारनता एते कलमा हेमकान्तयः ॥
ददतीवोपायनानि मात्रे क्षेत्रभुवे मुदा ॥४१॥

विश्वामित्रः—पश्यतं पुरः स्थितं कृषीवलम् ॥

क्षेत्रं कृष्टं हलेन प्रथममकठिनं
बीजरोहस्य योग्यम् ॥
कृत्वा प्रक्षिप्य धान्यं प्रकृतिवशभवांस्तत्र
चोत्पाट्य घासान् ॥
रक्षित्वाहर्निशं तच्छ्रमसुकृतफलं शस्य-
माप्त्वा प्रकामम् ।
क्षेत्राजीवो मघोनः सुखमपि तृणवन्मन्यते
साम्प्रतं सः ॥ ४२ ॥

ततश्च सः—देवान् पितॄन् नरपतिं सुहृदोऽतिथींश्च ।
कृत्वा यथास्वमथ धान्यविभागभाजः ॥

भूयो भुवि प्रचुरशस्यमिहेच्छमानः[14] ॥
गोपायिता निजकलत्रशिशून् प्रसन्नः* ॥४३॥

लक्ष्मणः—अहो श्लाघनीयवृत्तय इमे कृषीवलाः

विश्वामित्रः—बाढम् । यतः—

गणयन्तः श्रमं नैव दैवायत्तफलाः सदा ।
लब्धेन तुष्टा अक्षुद्राः सर्वजीवितहेतवः ॥४४॥

अथ च—

एषां क्षेत्रं कर्मभूमिर्दारपोतादिकं जगत् ।
बन्धवः सततं गावो धर्मोऽभ्यागतपूजनम् ॥४५॥

रामः—यथेमे जीवन्ति श्रमफलभुजोऽस्तान्तरमलाः।
परस्तोषश्चैषां भवति विभवैरत्र लघुभिः ॥

---

(14) अत्र शानच् प्रत्ययो न किन्तु चानश् (पा० ३।२।१२९) इच्छां कर्तुं शीलमस्यास्तीतीच्छमानः । 'ताच्छील्यं तत्स्वभावता' इति वृत्तिकृत् । शानच् त्वत्र भवत्येव न । इच्छतेः परस्मैपदित्वात् ॥

* 'पुनश्च' 'ख'

मनो वैरास्पृष्टं न गुरुकलहा नामिषरुचिः(15)
पुरे चैतत्सर्वं नयतु मनुजं पूज्यपदवीम् ॥४६॥

बहुगुणा अपीमे स्वान् लघूनेव मन्यन्ते । अहमिच्छामि नगरमेतेषां बहून्नयेयम् । येन नगराणि निर्जितनाकपुराणि तपोवनकल्पानि भविष्यन्ति ।

विश्वामित्रः——नगरेषु वसतामेषां सर्वे गुणा नष्टा भविष्यन्ति एते तत्र कृषिकर्म विस्मरिष्यन्ति । येऽत्र स्वान् लघून्मन्यन्ते त एव तत्र काले राज्ञोपि स्वेभ्यो लघीयसो मंस्यन्ते । अत्राभ्यागतसेवापरास्तत्र स्वानेवपूज्यतमान्मानयिष्यन्ति । एतेषु नगरदोषाः स्फारीभविष्यन्ति । यस्य यः सहजो निवासो यत्सहजं कर्म तत्रैव तद्गुणतामावहति । मानमर्हन्त्येतेऽत्र निवसन्तः स्वं कर्मात्यजन्तो न बह्वभीप्सन्तश्च ।

(15) आमिषशब्दोऽत्र भोग्यवस्तु (luxury) पर्यायः । न तु मांसपर्यायः । तथा च केशवः "आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि"

केवलं राजतः पौरेभ्यश्च नेमे कदर्थनमाप्नुयु-
रित्येव महाराजेन त्वया च यतितव्यम् ।

रामः—भगवान् परिणामदर्शी । स्थायि सुखं सर्वेषामिच्छति ।

लक्ष्मणः—भगवन् ग्राम्यगुणकर्मव्यवहारान्वनशोभासनाथान् चिरं द्रष्टुमिच्छामि । सर्वमेतन्नवमिव पश्यतो मे चक्षुर्मानसानि न परां तृप्तिमाप्तानि । किन्तु भगवत उटजाद्दूरमागता वयमस्ताद्रिशिखरन्यस्तपदो भगवान्दिवाकरश्चरमं स्वप्रभुत्वं श्वः पुनरुदेतुं दर्शयति ।

करा महीभृतो मूर्ध्नि अस्तमप्येष्यतो रवेः ॥
मन्दतेजा अपि महान्महत्वं स्वं जहाति न ॥४७॥

ततश्च श्वो भूयोऽत्र ग्राम्यां शोभां द्रक्ष्यामः सम्प्रत्युटजगमनमेवोचितं मन्ये ।

विश्वामित्रः—नगरनिवासिभ्यां युवाभ्यां ग्राम्यशोभा सदैव नव्यतामावक्ष्यति । न च प्रत्य-

ह्यमत्रागन्तुं शक्यते । ततस्तूर्णमत्रैव कुल्यायां सांध्यं कर्म समाप्यानुभूयतां ग्राम्याणामातिथ्यम् । नीयतामत्रैव रात्रिः ।

रामलक्ष्मणौ—यथा भगवन्तः प्रसीदन्ति ।

(सर्वे परिक्रामन्ति)

रामः—अहो रम्यदृश्यमिदं गवां प्रत्यागमनं वनात् ।

गत्या पवित्रं विपिनं विधाय ।
जग्ध्वा प्रकामं रसमोषधीनाम् ॥
वत्सान्पयः पाययितुं दिनान्ते ।
गावः समायान्ति शनैर्गृहाणि ॥४८॥

लक्ष्मणः—आर्य सम्यगाह भवान्—

उत्कण्ठिताः सुतवपुःपरिलेढुमेताः ।
ऊधोभरेण लघु धावितुमक्षमाश्च ॥
स्वैरं व्रजे निहितदृष्टय आपतन्ति ।
गावः समुन्नतविषाणविलोकनीयाः ॥४९॥

रामः—तथा च—

वत्सा उत्पुलुत्य यान्ति त्वरितमभिगतां
मातरं वीक्ष्य गोष्ठे ।
दृष्ट्वेत्थं तान् घटोध्न्यः प्रणयमिव पयः
स्रावयन्ति स्तनेभ्यः ॥
अन्योन्येभ्यः प्रकृष्टं सुखदमिह पुरु प्रेम
दृश्यं पशूनाम् ।
यस्मिन्नैव क्वचित्ताः किमपि फलमिमाः
कामयन्ते सुतेभ्यः ॥५०॥

विश्वामित्रः—(अग्रतोऽवलोक्य) एषा कापि वृद्धा गोपिका क्षेत्राच्छस्यघासादि वत्सेभ्य आनयन्ती जवेनेत एति । तदस्या गृहप्रवृत्तिमेनां पृच्छामि ।

(ततः प्रविशति वृद्धगोपिका)

विश्वामित्रः—(उपसृत्य) वृद्धे स्वस्ति ।

वृद्धा—इसि णमोदे (ऋषे नमस्ते)

विश्वामित्रः—अपि क्षेमं तव गृहे ।

वृद्धा—सव्वं मह घरम्मि खेमं । मह पुत्ताणं

पिदा पुत्तबहुं आणेदुं अण्णं गामं गदो । पुत्तो खेत्तम्मि समाहिदाणं सस्साणं रक्खं करेदि । पउत्ता घरकम्मे लग्गा । आअच्छदु भवं अज्ज मह घरं पवित्तं (!) करीअदु (विलोक्य) एदे कस्स कुमारा रमणीआ एदाणं आकिदी (सर्वं मम गृहे क्षेमम् । मम पुत्राणां पिता पुत्रवधूमानेतुमन्यं ग्रामं गतः । पुत्रः क्षेत्रे समाहतानां सस्यानां रक्षां करोति । पौत्रा गृहकर्मणि लग्नाः । आगच्छतु भवानद्य मम गृहं पवित्रं क्रियताम् । एतौ कस्य कुमारौ । रमणीयैतयोराकृतिः ।)

विश्वामित्रः—एतौ महाराजदशरथस्य पुत्रौ ।

वृद्धा—किं किं एदाणं णामाइं(!) (किं किमेतयोर्नामनी)

विश्वामित्रः—(निर्दिश्य) अयं रामो ज्येष्ठः । अयं लक्ष्मणः

रामः—(उपश्रुत्य) सावित्रो रामोभिवादये (प्रणमति)

लक्ष्मणः—आर्यरामानुजोभिवादयति (प्रणमति)

वृद्धा—चिरं जीवह तुम्हे (विलोक्य) किं दोहिं वि तुम्हेहिं धणुआ धीरअंदि (चिरं जीवतं युवाम् किमुभाभ्यां युवाभ्यां धनुषी ध्रियेते)

विश्वामित्रः—सदा क्षत्रा धनुर्बिभ्रति धर्मरक्षां कर्त्तुम् । एताभ्यां मम यज्ञविघ्नकारिणो राक्षसा हताः ।

वृद्धा—एत्थ गामे वणम्मि अ मिआ ण मारिदव्वा (अत्र ग्रामे वने च मृगा न मारयितव्याः)

लक्ष्मणः—तैस्तु युष्माकं सस्यहानिर्भवति ।

वृद्धा—तह वि ण मारिदव्वा । अम्हे दे (!) लोट्ठेहिं णिवारेमो (तथापि न मारयितव्याः । वयं तान् लोष्ठैर्निवारयामः)

लक्ष्मणः—अपकारिषु भवत्याः कथं पक्षपातः ।

वृद्धा—मिआ सहवासेण अम्हाणं बन्धुआ जादा धावंदा सोहेंदि । (मृगाः सहवासेनास्माकं बन्धवो जाताः । धावन्तः शोभन्ते)

विश्वामित्रः—(रामं प्रति) दृष्टमेषां ग्राम्याणां दयार्द्र-मनस्त्वम् । अपकारिभ्योऽपि न क्रुध्यन्ति । तेषां गुणान् स्तुवन्ति ।

रामः—सत्यं देवतुल्यमनस इमे ।

विश्वामित्रः—(वृद्धां प्रति) आर्ये गच्छतु भवती। वयमपि सन्ध्यामुपास्य तव गृहमागच्छामः।

वृद्धा—तह (तथा) (निष्क्रान्ता)

विश्वामित्रः—वत्सौ किमर्थं कृषीवला मया वां दर्शिताः।

लक्ष्मणः—एतेषां सन्तोषमल्पया सम्पदा भवतीति।

रामः—अस्माकं व्यवहारज्ञानाय। यतोऽदृष्ट्वा तत्त्वेनैतत्सर्वमेतेषां व्यवहारनिर्णयोऽशक्यः कर्त्तुम्। पौरास्तु स्वान् पक्षान् पाटवेन साधयितुं प्रभवन्ति। एतेषां तु वृत्तं दृष्ट्वैव व्यवहारो निर्णेतुं शक्यः।

विश्वामित्रः—सम्यगवगतं रामेण।

(उभौ विश्वामित्रं प्रणयतः)

विश्वामित्रः—(स्वगतम्) सम्प्रति रावणेन योद्धुं तं जेतुं च मयैतौ प्रभूकृतौ। व्यवहारं दर्शितौ। एतयोः कर्मश्रमं दशरथस्य सख्युश्चैतावत्पुत्र-विरहं परिमार्ष्टुमिच्छामि। आहूतोऽहं महाराजेन

तत्र भवता वैदेहेनजमकेन सांवत्सरिकसत्रान्तमभिनन्दितुम् । तस्य सर्वगुणमनोहरा दुहिता विधिना रामायेव निर्मिता । यः शाम्भवं धनुः सज्यं करिष्यति श्लाघ्यश्चेत्स एव तस्याः पतिर्भविष्यतीति तस्य महाराजस्य निश्चयः । यदि रामस्तन्न शक्नोति नान्यः कोपि शक्ष्यति । (विचिन्त्य) राम एव सीतां परिणेष्यति । अहमपि दशरथस्यानृण्यं भक्ष्ये ।

रामः—(निरूप्य) किं सचिन्त इव भगवाँल्लक्ष्यते ।

विश्वामित्रः—इतो विदेहानस्माभिर्गन्तव्यमिति यात्राप्रकारं चिन्तयामि ।

रामः—तत्रापि राक्षसोपप्लवः कच्चित् ।

विश्वामित्रः—राक्षसोपप्लवो भवेदपि त्वयि गते शान्तो भविष्यति सः । किन्तु नास्तीति मन्ये । भगवान्वैदेहो जनकः सांवत्सरिकं सत्रमास्ते । आहूतोहं तेन सत्रान्तमभिनन्दितुम् ।

लक्ष्मणः—आवाभ्यामपि भगवता सह तत्र गन्तव्यं भविष्यति ।

विश्वामित्रः—बाढम् । तत्र युवयोर्गमनेन सत्रान्तं सफलं भविता ।

लक्ष्मणः—कदा पुनरयोध्यां नेष्यति भगवान् नौ ।

विश्वामित्रः—यज्ञफलं तस्य राजर्षेरनुभाव्य ।

रामः—कथमिव ।

विश्वामित्रः—तत्र गत्वा त्वया स्वयमनुभाविष्यते ।

लक्ष्मणः—तथापि—

ज्ञात्वोद्दिश्य नरा लाभं कर्मोत्साहेन कुर्वते ॥
अनुद्दिश्य फलं कार्यं यत्तत्रास्त्येव मन्दता ॥५१॥

रामः—कथमनुद्दिश्य फलमिति वदति वत्सः । भगवान् तत्र गमनं सफलं भवितेति ब्रूते ।

विश्वामित्रः—फलस्वरूपं फलं लब्ध्वैव ज्ञातव्यम्

रामः—तथास्तु । भगवत आदेशो न विवादमर्हति

लक्ष्मणः—एवमस्तु ।

विश्वामित्रः—(स्वगतम्) लब्धसीते रामे मम सर्वं कर्माधुनाऽवसितं भविष्यति । अस्त्रविद्या तु रामे साधु न्यस्ता मया ।

तपोभिर्ब्रह्मत्वं परममिह लब्धं यदि मया ।
न शस्त्रास्त्रग्रामो मयि विरत एवास्त्विति पुनः ॥
अतः सर्वो न्यस्तः स गुणमहिते क्षत्रतनये ।
श्रमेणाप्तं यत्तत्त्यजति मनुजो नैव हि वृथा ॥५२॥

(निष्क्रान्ताः सर्वे)

॥ इति पञ्चमोऽङ्कः ॥



## ॥ षष्ठोऽङ्कः ॥

(ततः प्रविशन्ति त्रयो भटाः)

एकः—मुट्ठिअ तवोवणादो आगदो वीसामित्तो एत्थ चिट्ठदि । अम्हे तस्स सेवं कादुं णिउत्ता केत्तिअं सो चिट्ठिस्सदि (मुष्टिक तपोवनादागतो विश्वामित्रोऽत्र तिष्ठति। वयं तस्य सेवां कर्तुं नियुक्ताः। कियत्स स्थास्यति)।

द्वितीयः—ठूलंस, ण आणामि केतिअं चिट्ठिस्सदि त्ति । दुवे कुमारा तहिं रमणिज्जाकिदीओ दीसंदि । वीसामित्तस्स पादसंवाहणावदेसेण चिरं ते पेक्खिअ दिट्ठिं पसण्णं करेमि (स्थूलांस न जानमि कियत्स्थास्यतो ति। द्वौ कुमारौ तत्र रमणीयाकृती। विश्वामित्रपादसंवाहनापदेशेन चिरं तौ दृष्ट्वा दृष्टिं प्रसन्नां करोमि)

तृतीयः—मुट्ठिअ, जुवाणा वि ते कुमारा त्ति कहेसि (मुष्टिक युवानावपि तौ कुमाराविति कथयसि)

मुष्टिकः—दंडबाहु, वीसामित्तो महाराओ अ ते कुमारा त्ति कहंदि । अहं पि कहेमि (दंडबाहो विश्वामित्रो महाराजश्च तौ कुमाराविति कथयतः। अहमपि कथयामि)।

स्थूलांसः—ज्जेट्ठो रामो उण जोव्वणविआरस्स गमणीओ संवुत्तो (ज्येष्ठो रामः पुनर्यौवनविकारस्य गमनीयः संवृत्तः)।

दंडबाहुः—कहं णेदं (कथं न्विदम्)

स्थूलांसः—अम्हाणं महाराअस्स दुहिदरं (दुहिदं) सीदं एत्थ उज्जाणम्मि चिरं पेक्खदि (अस्माकं महाराजस्य दुहितरं सीतामत्रोद्याने चिरं पश्यति)।

मुष्टिकः—पुव्वं लक्खणो छाहा विअ तं अणुगदो आसि। संपदं वीसामित्तो तं उपदेसावदेसेण अण्णदो णेदि रामं अ उज्जाणे मुंचदि (पूर्वं लक्ष्मणश्छायेव तमनुगत आसीत्। साम्प्रतं विश्वामित्रस्तमुपदेशापदेशेनान्यतो नयति रामं चोद्याने मुञ्चति)

स्थूलांसः—अम्हाणं राअदारिआ वि विडवंतरिदा भविअ चिरं तं ज्जेव पेक्खदि (अस्माकं राजदारिकाऽपि विटपान्तरिता भूत्वा चिरं तमेव पश्यति)।

मुष्टिकः—जइ महाराअस्स अणुमदं भवे ता शिग्घं इमाणं विवाहो भवे (यदि महाराजस्यानुमतं भवेत्तर्हि शीघ्रमेतयोर्विवाहो भवेत्)।

दीर्घबाहुः—जइ ण भविस्सदि ता दुवे वि उम्मत्ता भविस्संदि (यदि न भविष्यति द्वावप्युन्मत्तौ भविष्यतः)

मुष्टिकः—किं महाराओ वीसामित्तो अ जाणंदि एदं—(किं महाराजो विश्वामित्रश्च जानीत एतत्)।

दीर्घबाहुः—जाणंदि अदो ज्जेव ताणं एअंते पेक्खणं अणुमदं भवे (जानीतः। अतएव तयोरेकान्ते दर्शनमनुमतं भवेत्)

स्थूलांसः—ता शिग्घं ज्जेव एदाणं विवाह-मंगलं पेक्खिअ जम्मं सफलं करिस्सम्म (तच्छीघ्रमेवैतयोर्विवाहमङ्गलं दृष्ट्वा जन्म सफलं करिष्यामः)

दीर्घबाहुः—(विलोक्य) अम्मो इदो ज्जेव आअच्छदि रामो। भोदु सअं णिओअं कादुं गच्छम्ह (अहो इत एवागच्छति रामः। भवतु स्वकं नियोगं कर्तुं गच्छामः)।

(निष्क्रान्ताः)

(ततः प्रविशति समदनावस्थो रामः)

रामः—(परिक्रम्य दीर्घं निःश्वस्य—)

सा निष्कलङ्करजनीशमुखी मनोज्ञा ।
दृष्टा यदेह कुसुमानि समाहरन्ती ॥
नूनं तदाप्रभृति विस्मृतसर्वभावम् ।
चेतो ममेदमभवत्तदवेक्षणोत्कम् ॥ १ ॥

अथ—किं सा जगन्मोहयितुं विधात्रा ।
विनिर्मिता पेशलसर्वगात्रा ॥
स्त्रीरूपनिर्माणविधौ विधातुः ।
गर्वं तनूकर्तुमुत स्मरेण (1) ॥ २ ॥

अहो चित्रम् ।
सकृद्दृष्टैवाकरोन्मां विस्मृतान्यविलोकनम् ॥
भूयो दृष्टा मया सैव न जाने किं करिष्यति ॥३॥

---

(1) cf " तस्याः सखे नियतमिन्दुकलामृणाल–
ज्योत्स्नादि कारणमभून्मदनश्च वेधाः ॥ "
(मालतीमाधवे)

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः ।
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ॥ "
(विक्रमोर्वश्याम्)

मातॄणां स्तनपानतोऽप्युपचितं वात्सल्यमानन्ददम् ।
यासां ता भवने विहाय न मनाक् स्वत्वाद्भूवं च्युतः
भीमान्यायुधवन्ति मे न चलितं रक्षांस्यकुर्वन्मनः।
तां दृष्ट्वाहमथं प्रभुर्न मनसो नैवास्मि किं योऽभवम्
॥ ४ ॥

अथवा—यज्ञे विघ्नान्कुर्वतां राक्षसानाम् ।
शस्त्रैरस्त्रैश्चापि नाशं विधाय ॥
विश्वासोऽभूदात्मशक्तेः स्थिरत्वे ।
यस्तस्येशो दर्शयत्यल्पतां मे ॥ ५ ॥

अहो बलवान् खलु तां भूयो द्रष्टुं मम कामोऽयं-ज्वर इव तापयति देहम् । अकार्यमपि मां कारयति ।

यतः—नैव कर्म ऋषेराज्ञामलब्ध्वाकार्षमन्यदा ॥
अनिवेद्यैव गुरवे चौरवद्यदिहागमम् ॥ ६ ॥

अथच—विपिनेऽप्युषितं येन मया साकं रणेष्वपि ॥
अन्यमात्मानमिव तं हित्वा लक्ष्मणमागमम्
॥ ७ ॥

पृष्टो मया न गुरुरत्र न लक्ष्मणश्च ।
न्याय्यं न वेदमिति नैव विचारितं च ॥
तस्यां निखातमिव मानसमस्ति गाढम् ।
रामः स एव किमहं विषयैरकम्प्यः ॥ ८ ॥

भवतु भगवतो विश्वामित्राद्दूरे न स्थातुमुचितम् । तत्तत्रैव गच्छामि । निवर्त्यतामात्माऽस्माद्विज्ञातकुलाचारस्त्रीदर्शनप्रसङ्गात् ।

भवत्वानन्दहीनं मे तामदृष्ट्वाद्य मानसम् ॥
न तु शक्यं मया त्यक्तमगर्ह्यं चरितं सताम् ॥९॥

(परिक्रामति)

अहो न शक्यते गन्तुम् ।

प्रभूयते न क्वचिदेव गन्तुम् ।
इतः सितौ मे चरणौ दृढं किम् ॥
अवीक्ष्य तामत्र न चक्षुषी मे ।
द्रष्टुं समर्थे किमपीतरच्च ॥१०॥

मन आनन्दभरितं यस्मिन्दृष्टे भवेन्मम ॥
तस्यास्तन्मुखमालोक्य ततो यास्यामि सत्वरम्
॥११॥

(विचिन्त्य) यदि सा नाद्यात्रायायात् । कियन्तं कालं स्थास्यामि । भवतु न सन्दिग्धफलं श्रमं मतिमान् कुर्यात् । तन्नात्र स्थातुमुचितम् । यतः—

महर्षिणा ब्रह्मचर्यनियमा दर्शितास्तु ये ।
मनो निरोधस्तेषां तु सर्वेभ्यः प्रथमो मतः ॥१२॥

ततश्च—

ज्ञापितो ब्रह्मचर्यं तु न रामः पश्यतु स्त्रियम्
तदेकान्ते स्थातुमत्र नोचितं मम साम्प्रतम् ॥१३॥

(जिगमिषां नाटयति)

एष गच्छामि (पुरोऽवलोक्य) अहो उपविष्टेयं तरुमूले मम नेत्रे आनन्दसरसि मज्जयन्ती । स्तोकमत्र स्थित्वा तद्दर्शनसुखमनुभूय गच्छामि । (निपुणं निरूप्य) इयं तु वातकम्पिता माधवी लता(?)

धिक्, अतिसंहितोऽस्म्येनया । अथवा ममैवेदं मनोवैक्लव्यम् । एवं कामिनो मोह्यन्ते ।

दूरं क्षिप्त्वा वैभवं मानसस्य ।
देहं कृत्वा कामतप्तं प्रकामम् ॥
शुद्धं चेतो धीमतामप्यजस्रम् ।
स्वस्मिन् रूपे मज्जयन्तीह नार्यः ॥ १४ ॥

(विचिन्त्य) नैवं वक्तुमुचितम् ।

सा नैव वक्रगतिरास मयि स्थितेऽत्र ।
नेत्रे नते व्यधित मामवलोक्य तूर्णम् ॥
नायात् पुरो मम ततः किमहं तयेत्थम् ।
संमोहितं स्वमधुना वितथं वदामि ॥१५॥
किं तर्हि—क्षिप्ताः शरा मे हृदयं विधाय ।
लक्ष्यं तया भ्रूविशिखासनाभ्याम् ॥
स्वं मन्यमानः प्रणयस्य तस्याः ।
पात्रं वृथैवाहमुतास्मि मूढः ॥ १६ ॥

यद्भूतं भावि च तद्भवतु । न मयात्र वृथा विचार-श्रमः कर्त्तव्यः । भवतु गच्छामि ।

(नेपथ्ये)

इदो इदो सहीओ (इत इतः सख्यौ)

रामः—(श्रुत्वा विलोक्य) सम्प्रति नास्ति मे मतिभ्रमः। सत्यं ममामन्दनयनानन्दस्यन्दि शारदपूर्णेन्दुच्छवि मुखं बिभ्रती सैषा मां मुमूर्षुमिव वदनदीधितिभिः सञ्जीवयितुं सह सखीभ्यामित एवैति।

उद्वर्तमानेऽब्दे नभसि यथा नृत्यति बर्हिणः॥
तथाऽऽगतायामत्रास्यां मानसं नृत्यतीव मे ॥१७॥

(ततः प्रविशति सखीभ्यां सह सीता)

एका सखी—भट्टिदारिए एत्थ उज्जाणे कहिं उवविसिअ मणोविणोदं करिस्ससि (भर्तृदारिके अत्रोद्याने क्वोपविश्य मनोविनोदं करिष्यसि)

अपरा—माहवीलदासमीवे असोअपाअवच्छाहाए वा (माधवीलतासमीपे, अशोकपादपच्छाये वा)

सीता—सहि चन्दकले भट्टिदारिए त्ति कहेसि। जधापुव्वं कधं ण कहेसि सहि सीदे त्ति

(सखि चन्द्रकले भर्तृदारिके, इति कथयसि यथापूर्वं कथं न कथयसि सखि सीते, इति)

चन्द्रकला—तुमं पि अज्ज अण्णा विइ कथं दीसेसि (त्वमप्यद्यान्येव कथं दृश्यसे)

सीता—चन्द्रकले कधं तुमं एव्वं भणेसि सा ज्जेव अहं तुम्हाणं पिअसही सीदा (मधुरिके कथं त्वमेवं भणसि सैवाहं युवयोः प्रियसखी सीता)

मधुरिका—अहं उण तुमं अण्णं ज्जेव पेक्खामि। कहिं गदं दे चावलं। तुह णअणाइं भीदाए विअ ण उट्ठेंदि। तेसुं राएण जागिदा लक्खीअसि। एअंते मणेण किं चिन्तेसि त्ति ण जाणीअदि (अहं पुनस्त्वामन्यामेव पश्यामि। क्व गत ते चापलम्। तव नयने भीताया इव नोत्तिष्ठतः। तयो रागेण जागृतेव लक्ष्यसे। एकान्तेन मनसा किं चिन्तयसीति न ज्ञायते)।

चन्द्रकला—अज्ज शिग्घं एत्थ आअदा अ (अद्य शीघ्रमत्रागता च)

मधुरिका—जोव्वणविआरो तुह जादो भवे। को क्खु जुवा तुह बाहुलदं कंठम्मि करिअ

धण्णो भविस्सदि (यौवनविकारस्तत्र जातो भवेत् । कः खलु युवा तव बाहुलतां कण्ठे कृत्वा धन्यो भविष्यति)

सीता—अवेध तुम्हे ण जाणे किं मन्तेध (अपेतं युवाम् । न जाने कि मन्त्रयथः)

रामः—दृष्टं मयाप्यस्याश्चान्यत्वमिव । कस्यापि ब्रह्मर्षेर्दुहिता भवन्तीयं ममागम्या न स्यात् । अन्यवधूर्भवित्री वा दुष्प्रापा भवेत् । तदा व्यर्थमेव मया रामेणास्यां मनो निहितम् । (विचिन्त्य) नैवं भविष्यति । इथं हि—

नैवागम्या न दुष्प्रापा यन्मनो मेऽत्र धावति ॥
कृत्याकृत्यविवेके तु प्रमाणं हि सतां मनः[2] ॥१८॥

सीता—ण जाणे कुदो मह अज्ज मणं एत्थ उज्जाणे जधापुव्वं पसण्णं ण भवदि । सरीरम्मि

---

(2) cf. " असंशयं क्षत्रपरिग्रहक्षमा ।
यदार्यमस्यामभिलाषि मे मनः ॥
सतां हि सन्देहपदेषु वस्तुषु ।
प्रमाणमन्तःकरणप्रवृत्तयः " ॥ (शाकुन्तले)

अ महन्तो संतावो वट्टदि। चलिदुं वि ण सक्कुणोमि
(न जाने कुतो ममाद्य मनोऽत्रोद्याने यथापूर्वं प्रसन्नं न भवति।
शरीरे च महान् संतापो वर्तते चलितुमपि न शक्नोमि)।

मधुरिका—एत्थ मणिसिलादलम्मि उपविट्ठं
भट्टिदारिअं कुसुमपरिमलेण उज्जाणवादो सत्थं
करिस्सदि (अत्र मणिशिलातले, उपविष्टां भर्तृदारिकां कुसुम-
परिमलेनोद्यानवातः स्वस्थां करिष्यति)

सीता—भोदु उवविसम्ह (भवतु, उपविशामः)

(ता उपविशन्ति)

सीता—(दीर्घं निःश्वस्य) वड्ढदि मे एत्थ सरीर-
संतावो (वर्धते मेऽत्र शरीरसन्तापः)।

(मधुरिका नलिनीदलेन वीजयति)

रामः—तस्याः शरीरसन्तापेनाहमपि कथं तप्ये।
तरङ्गिण्याभोग एष रम्यारामे सरः शुभम्।
मन्दानिलः सौरभवान् सर्वं तापाय मे कथम्॥१९॥

आम् ज्ञातम्—

संयोजिते मानसे तु शरीरे वा यदा द्वयोः
एकस्य धर्मा यान्त्यन्यं तप्ये तस्याश्च तपातः॥२०॥

दीर्घबाहुः—जइ ण भविस्सदि ता दुवे वि उम्मत्ता भविस्संदि (यदि न भविष्यति द्वावप्युन्मत्तौ भविष्यतः)

मुष्टिकः—किं महाराओ वीसामित्तो अ जाणंदि एदं— (किं महाराजो विश्वामित्रश्च जानीत एतत्)।

दीर्घबाहुः—जाणंदि अदो ज्जेव ताणं एअंते पेक्खणं अणुमदं भवे (जानीतः। अतएव तयोरेकान्ते दर्शनमनुमतं भवेत्)

स्थूलांसः—ता शिग्घं ज्जेव एदाणं विवाह-मंगलं पेक्खिअ जम्मं सफलं करिस्सम्म (तच्छीघ्रमेवैतयोर्विवाहमङ्गलं दृष्ट्वा जन्म सफलं करिष्यामः)

दीर्घबाहुः—(विलोक्य) अम्मो इदो ज्जेव आअच्छदि रामो। भोदु सअं णिओअं कादुं गच्छम्ह (अहो इत एवागच्छति रामः। भवतु स्वकं नियोगं कर्तुं गच्छामः)।

(निष्क्रान्ताः)

(ततः प्रविशति समदनावस्थो रामः)

रामः—(परिक्रम्य दीर्घं निःश्वस्य—)

सा निष्कलङ्करजनीशमुखी मनोज्ञा ।
दृष्टा यदेह कुसुमानि समाहरन्ती ॥
नूनं तदाप्रभृति विस्मृतसर्वभावम् ।
चेतो ममेदमभवत्तदवेक्षणोत्कम् ॥ १ ॥

अथ—किं सा जगन्मोहयितुं विधात्रा ।
विनिर्मिता पेशलसर्वगात्रा ॥
स्त्रीरूपनिर्माणविधौ विधातुः ।
गर्वं तनूकर्तुमुत स्मरेण (1) ॥ २ ॥

अहो चित्रम् ।
सकृद्दृष्टैवाकरोन्मां विस्मृतान्यविलोकनम् ॥
भूयो दृष्टा मया सैव न जाने किं करिष्यति ॥३॥

---

(1) cf " तस्याः सखे नियतमिन्दुकलामृणाल—
ज्योत्स्नादि कारणमभून्मदनश्च वेधाः ॥ "
(मालतीमाधवे)

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः ।
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ॥ "
(विक्रमोर्वश्याम्)

मातॄणां स्तनपानतोप्युपचितं वात्सल्यमानन्ददम्।
यासां ता भवने विहाय न मनाक् स्वत्वाद्भूवं च्युतः
भीमान्यायुधवन्ति मे न चलितं रक्षांस्यकुर्वन्मनः।
तां दृष्ट्वाहमयं प्रभुर्न मनसो नैवास्मि किं योऽभवम्
॥ ४ ॥

अथवा—यज्ञे विघ्नान्कुर्वतां राक्षसानाम् ।
शस्त्रैरस्त्रैश्चापि नाशं विधाय ॥
विश्वासोऽभूदात्मशक्तेः स्थिरत्वे ।
यस्तस्येशो दर्शयत्यल्पतां मे ॥ ५ ॥

अहो बलवान् खलु तां भूयो द्रष्टुं मम कामोऽयं-ज्वर इव तापयति देहम्। अकार्यमपि मां कारयति।

यतः—नैव कर्म ऋषेराज्ञामलब्ध्वाकार्षमन्यदा ॥
अनिवेद्यैव गुरवे चौरवद्यदिहागमम् ॥ ६ ॥

अथच—विपिनेप्युषितं येन मया साकं रणेष्वपि ॥
अन्यमात्मानमिव तं हित्वा लक्ष्मणमागमम्
॥ ७ ॥

पृष्टो मया न गुरुरत्र न लक्ष्मणश्च ।
न्याय्यं न वेदमिति नैव विचारितं च ॥
तस्यां निखातमिव मानसमस्ति गाढम् ।
रामः स एव किमहं विषयैरकम्प्यः ॥ ८ ॥

भवतु भगवतो विश्वामित्राद्दूरे न स्थातुमुचितम् । तत्तत्रैव गच्छामि । निवर्त्यतामात्माऽस्मादविज्ञातकुलाचारस्त्रीदर्शनप्रसङ्गात् ।

भवत्वानन्दहीनं मे तामदृष्ट्वाद्य मानसम् ॥
न तु शक्यं मया त्यक्तमगर्ह्यं चरितं सताम् ॥९॥

(परिक्रामति)

अहो न शक्यते गन्तुम् ।

प्रभूयते न क्वचिदेव गन्तुम् ।
इतः सितौ मे चरणौ दृढं किम् ॥
अवीक्ष्य तामत्र न चक्षुषी मे ।
द्रष्टुं समर्थे किमपीतरच्च ॥१०॥

मन आनन्दभरितं यस्मिन्दृष्टे भवेन्मम ॥
तस्यास्तन्मुखमालोक्य ततो यास्यामि सत्वरम्
॥११॥

(विचिन्त्य) यदि सा नाद्यात्रायायात् । कियन्तं कालं स्थास्यामि । भवतु न सन्दिग्धफलं श्रमं मतिमान् कुर्यात् । तन्नात्र स्थातुमुचितम् । यतः—

महर्षिणा ब्रह्मचर्यनियमा दर्शितास्तु ये ।
मनो निरोधस्तेषां तु सर्वेभ्यः प्रथमो मतः ॥१२॥

ततश्च—

ज्ञापितो ब्रह्मचर्यं तु न रामः पश्यतु स्त्रियम्
तदेकान्ते स्थातुमत्र नोचितं मम साम्प्रतम् ॥१३॥

(जिगमिषां नाटयति)

एष गच्छामि (पुरोऽवलोक्य) अहो उपविष्टेयं तरुमूले मम नेत्रे आनन्दसरसि मज्जयन्ती । स्तोकमत्र स्थित्वा तद्दर्शनसुखमनुभूय गच्छामि । (निपुणं निरूप्य) इयं तु वातकम्पिता माधवी लता(?)

धिक्, अतिसंहितोऽस्म्येनया । अथवा ममैवेदं मनोवैक्लव्यम् । एवं कामिनो मोह्यन्ते ।

दूरं क्षिप्त्वा वैभवं मानसस्य ।
देहं कृत्वा कामतप्तं प्रकामम् ॥
शुद्धं चेतो धीमतामप्यजस्रम् ।
स्वस्मिन् रूपे मज्जयन्तीह नार्यः ॥ १४ ॥

(विचिन्त्य) नैवं वक्तुमुचितम् ।

सा नैव वक्रगतिरास मयि स्थितेऽत्र ।
नेत्रे नते व्यधित मामवलोक्य तूर्णम् ॥
नायात् पुरो मम ततः किमहं तयेत्थम् ।
संमोहितं स्वमधुना वितथं वदामि ॥ १५ ॥

किं तर्हि—क्षिप्ताः शरा मे हृदयं विधाय ।
लक्ष्यं तया भ्रूविशिखासनाभ्याम् ॥
स्वं मन्यमानः प्रणयस्य तस्याः ।
पात्रं वृथैवाहमुतास्मि मूढः ॥ १६ ॥

यद्भूतं भावि च तद्भवतु । न मयात्र वृथा विचारश्रमः कर्त्तव्यः । भवतु गच्छामि ।

(नेपथ्ये)

इदो इदो सहीओ (इत इतः सख्यौ)

रामः—(श्रुत्वा विलोक्य) सम्प्रति नास्ति मे मति-श्रमः। सत्यं ममामन्दनयनानन्दस्यन्दि शारद-पूर्णेन्दुच्छवि मुखं बिभ्रती सैषा मां मुमूर्षुमिव वदनदीधितिभिः सञ्जीवयितुं सह सखीभ्यामित एवैति ।

उद्वर्तमानेऽब्दे नभसि यथा नृत्यति बर्हिणः ॥
तथाऽऽगतायामत्रास्यां मानसं नृत्यतीव मे ॥१७॥

(ततः प्रविशति सखीभ्यां सह सीता)

एका सखी—भट्टिदारिए एत्थ उज्जाणे कहिं उवविसिअ मणोविणोदं करिस्ससि (भर्तृदारिके अत्रोद्याने क्वोपविश्य मनोविनोदं करिष्यसि)

अपरा—माहवीलदासमीवे असोअपाअव-छाहाए वा (माधवीलतासमीपे, अशोकपादपच्छाये वा)

सीता—सहि चन्दकले भट्टिदारिए त्ति कहेसि। जधापुव्वं कधं ण कहेसि सहि सीदे त्ति

(सखि चन्द्रकले भर्तृदारिके, इति कथयसि यथापूर्वं कथं न कथयसि सखि सोते, इति)

चन्द्रकला—तुमं पि अज्ज अण्णा विइ कथं दीसेसि (त्वमप्यद्यान्येव कथं दृश्यसे)

सीता—चन्द्रकले कधं तुमं एव्वं भणेसि सा ज्जेव अहं तुम्हाणं पिअसही सीदा (मधुरिके कथं त्वमेवं भणसि सैवाहं युवयोः प्रियसखी सीता)

मधुरिका—अहं उण तुमं अण्णं ज्जेव पेक्खामि। कहिं गदं दे चावलं। तुह णअणाइं भीदाए विअ ण उट्ठेंदि। तेसुं राएण जागिदा लक्खीअसि। एअंते मणेण किं चिन्तेसि त्ति ण जाणीअदि (अहं पुनस्त्वामन्यामेव पश्यामि। क्व गतं ते चापलम्। तव नयने भीताया इव नोत्तिष्ठतः। तयो रागेण जागृतेव लक्ष्यसे। एकान्तेन मनसा किं चिन्तयसीति न ज्ञायते)।

चन्द्रकला—अज्ज शिग्घं एत्थ आअदा अ (अद्य शीघ्रमत्रागता च)

मधुरिका—जोव्वणविआरो तुह जादो भवे। को क्खु जुवा तुह बाहुलदं कंठम्मि करिअ

धण्णो भविस्सदि (यौवनविकारस्तत्र जातो भवेत् । कः खलु युवा तव बाहुलतां कण्ठे कृत्वा धन्यो भविष्यति)

सीता—अवेध तुम्हे ण जाणे किं मन्तेध (अपेतं युवाम् । न जाने किं मन्त्रयथः)

रामः—दृष्टं मयाप्यस्याश्चान्यत्वमिव । कस्यापि ब्रह्मर्षेर्दुहिता भवन्तीयं ममागम्या न स्यात् । अन्यवधूर्भवित्री वा दुष्प्रापा भवेत् । तदा व्यर्थमेव मया रामेणास्यां मनो निहितम् । (विचिन्त्य) नैवं भविष्यति । इयं हि—

नैवागम्या न दुष्प्रापा यन्मनो मेऽत्र धावति ॥
कृत्याकृत्यविवेके तु प्रमाणं हि सतां मनः[2] ॥१८॥

सीता—ण जाणे कुदो मह अज्ज मणं एत्थ उज्जाणे जधापुव्वं पसण्णं ण भवदि । सरीरम्मि

---

(2) cf. " असंशयं क्षत्रपरिग्रहक्षमा ।
यदार्यमस्यामभिलाषि मे मनः ॥
सतां हि सन्देहपदेषु वस्तुषु ।
प्रमाणमन्तःकरणप्रवृत्तयः " ॥ (शाकुन्तले)

अ महन्तो संतावो वट्टदि। चलिदुं वि ण सक्कुणोमि (न जाने कुतो ममाद्य मनोऽत्रोद्याने यथापूर्वं प्रसन्नं न भवति। शरीरे च महान् संतापो वर्तते चलितुमपि न शक्नोमि)।

मधुरिका—एत्थ मणिसिलादलम्मि उपविट्ठं भट्टिदारिअं कुसुमपरिमलेण उज्जाणवादो सत्थं करिस्सदि (अत्र मणिशिलातले, उपविष्टां भर्तृदारिकां कुसुमपरिमलेनोद्यानवातः स्वस्थां करिष्यति)

सीता—भोदु उववसिम्ह (भवतु, उपविशामः)

(ता उपविशन्ति)

सीता—(दीर्घं निःश्वस्य) वड्ढदि मे एत्थ सरीरसंतावो (वर्धते मेऽत्र शरीरसन्तापः)।

(मधुरिका नलिनीदलेन वीजयति)

रामः—तस्याः शरीरसन्तापेनाहमपि कथं तप्ये।

तरङ्गिण्याभोग एष रम्यारामे सरः शुभम्।
मन्दानिलः सौरभवान् सर्वं तापाय मे कथम्॥१९॥

आम् ज्ञातम्—

संयोजिते मानसे तु शरीरे वा यदा द्वयोः
एकस्य धर्मा यान्त्यन्यं तप्ये तस्याश्च तपातः॥२०॥

सीता—ण अअं तावो सीदवादेण संतिं गमिस्सदि-तो मा स्समं करेध (नायं तापः शीतवातेन शान्तिं गमिष्यति । तन्मा श्रमं कुरुतम्) ।

मधुरिका—(जनान्तिकम्) चन्द्रकले जधा मए चिंतिदं तह ज्जेव इमाए संतावो । अअं संतावो सरीरस्य ण मणस्स वट्टदि (चन्द्रकले यथा मया चिन्तितं तथैवास्याः सन्तापः । अयं सन्तापः शरीरस्य न मनसो वर्त्तते) ।

चन्द्रकला—(जनान्तिकमेव) कधं कुमारो अज्जो रामो सहसा सच्चं ण णिवेदीअदि (कथं कुमार आर्यो रामः सहसा सत्यं न निवेद्यते) ।

मधुरिका—(जनान्तिकमेव) सो अज्जो रामो वीसामित्तस्स परवसो दिढव्वदो अ ण शक्को पसादिदुं (स आर्यो रामो विश्वामित्रस्य (!) परवशो दृढव्रतश्च न शक्यः प्रसादयितुम्) ।

रामः—अहो सन्तप्ताया अस्याः मुखमापाण्डु शोभत एव ।

आश्चर्यम्—दृष्टापि या सिञ्चति मानसं मे
सुधारसेनेन्दुमुखी सुदूरात् ॥
सैव स्वयं तापमुदग्रमाता ।
व्यापार एवास्ति विधेरचिन्त्यः ॥२१॥

चन्द्रकला—(जनान्तिकम्) को अण्णो उवाओ। अम्हाणं पिअसही भट्टिदारिआ सोअणीआ भविस्सदि (कोऽन्य उपायः। अस्माकं प्रियसखी भर्तृदारिका शोचनीया भविष्यति)

मधुरिका—(जनान्तिकमेव) भोदु धम्माविरोहिणो पणअस्स ण अकज्जत्तणं वीसामित्तस्स मदं भविस्सदि। सो क्खु एदाणं विवाहेण पसण्णो भविस्सदि (भवतु, धर्माविरोधिनः प्रणयस्य नाकार्यत्वं विश्वामित्रस्य मतं भविष्यति। स खल्वेतयोर्विवाहेन प्रसन्नो भविष्यति)।

चन्द्रकला—(जनान्तिकमेव) उवाअस्स आरंभो कधं करीअदु (उपायस्यारम्भः कथं क्रियताम्)।

सीता—हला सहीओ आदवो मं बाधेदि (हला सख्यौ, आतपो मां बाधते)।

मधुरिका—पिअ सहि सीदे, छाहाए उव-
विट्ठा तुमं। कुदो एत्थ आदवो (प्रियसखि, सीते छायायामुपविष्टा त्वम्। कुतोऽत्रातपः)।

सीता—(सलज्जमिव) हं छाहा एत्थ (हं छायात्र)

रामः—

शीतस्पर्शे समीरेऽपि तरुच्छाये स्थिता पुनः॥
प्राप्ता सन्तापमत्युग्रमत्र को हेतुरुच्यताम्॥२२॥

अथवा—यथा पुंसो मानसे स्यात्कामजस्ताप ऊर्जितः
तथा स्त्रीणां न किं स स्यात्— (विचिन्त्य)
एषा कामार्दिता खलु॥२३॥

सत्यमहमिवैषा कस्यापि धन्यस्य पुंसो नेत्रानन्ददायिनो विरहेण दुःसहं सन्तापमनुभवति। अन्यानुरक्तां न कामयेतेति धर्मनियमः। ततश्च नूनमस्या निवर्त्तितात्मना मया भवितव्यम्।

मया किं प्राप्तमधुना स्वाविवेकफलं महत्॥
सुखं वीरत्वमपि मे विरते वत जीविते॥२४॥

मधुरिका—(जनान्तिकम्) अहं फुडं जेव पिअसहीं पुच्छिस्सं (अहं स्फुटमेव प्रियसखीं प्रक्ष्यामि)

चन्द्रकला—(जनान्तिकमेव) एवं भोदु (एवं भवतु)

मधुरिका—पिअसहि सीदे अअं ते संतावो मअणेण किदो दीसदि। जदो पहुदि अज्जो रामो एत्थ उज्जाणे तुए दिट्ठो तदो आरहिअ तुह संतावो जादो। पडिदिअसं वड्ढइ अ। जइ सच्चं णेदं ता कहेहि कोवि उवाओ करीअदु (प्रियसखि सीते अयं ते संतापो मदनेन कृतो दृश्यते। यतः प्रभृति—आर्यो रामोऽत्रोद्याने त्वया दृष्टस्तत आरभ्य तव संतापो जातः। प्रतिदिवसं वर्धते च। यदि सत्यं न्वेदं तत्कथय कोप्युपायः क्रियताम्)।

रामः—(श्रुत्वा सहर्षम्) किमहमेवास्यास्तापकारणतां गतोस्मि—तर्हि—

संतापिता भवतु गाढमियं स्मरेण।
यद्येनयास्मि निहितो हृदि चञ्चलाक्ष्या॥
तत्तो भवेयमनिशं हृदये मम स्यात्।
पूर्णेन्दुरम्यवदना यदि तन्न दुःखम्॥ २५॥

अहो—धिङ् मानवान् स्वार्थबुद्धीनन्यदुःखानपेक्षिणः
यदस्या दुःसहस्तापो ममानन्दाय कल्पते ॥२६॥

सीता—कधं तुम्हेहिं जाणिदं मह मणम्मि ते विआरा वट्टंदि त्ति (कथं युवाभ्यां ज्ञातं मम मनसि ते विकारा (विचारा) वर्तन्त इति )।

मधुरिका—किं अण्णं ता तुह सदावं करेदि (किमन्यत्तर्हि तव संतापं करोति)।

(सीता सलज्जा मौनमास्ते)

रामः—धिक्कष्टम्। ध्वस्तं नष्टं च मे गन्धर्वनगरम्।

कामाक्षिप्तधियः सुखाप्तविभवा दीनाः
खलाश्चालसाः।
व्यापारान् जगतो विलोक्य विविधान्
मन्यन्त आत्माश्रयान् ॥
विद्वांसः कृतिनस्तु कर्म सततं
कुर्वन्ति धर्म्यं पुनः।
लब्ध्वा तस्य फलं न वा विधिशात्
तुष्यन्ति धन्याश्च ते ॥२७॥

मधुरिका—अजाणिअ कारणं कधं तुह संदावनिवारणोवाओ करीअदु । ता अलं लज्जाए (अज्ञात्वा कारणं कथं तव सन्तापनिवारणोपायः क्रियताम् । तदलं लज्जया)

सीता—सहीओ, जं तुम्हेहिं भणिदं तं ज्जेव सच्चं । जइ तुम्हाणं ण कहेमि कस्स कहिस्सं (सख्यौ यद्युवाभ्यां भणितं तदेव सत्यम् । यदि युवाभ्यां न कथयामि कस्मै कथयिष्यामि) ।

रामः—(सहर्षम्) सम्प्रति जीवामि । अर्धमवसितं कर्मणो दैवविहितस्य । ज्ञास्यामि कस्येयं दुहितेति ।

मधुरिका—ता शिग्घं ज्जेव महाराओ वीसामित्तो स अज्जो रामो अ अण्णे अ णिवेदीअदु (तच्छीघ्रमेव महाराजो विश्वामित्रः स आर्यो रामश्चान्ये च निवेद्यन्ताम्)।

सीता—(दीर्घं निःश्वस्य) एक्कं गरुअं कज्जं तुम्हेहिं । विसुमरिदं (एकं गुरु कार्यं युवाभ्यां विस्मृतम) ।

मधुरिका—किं तं (किं तत्)।

चन्द्रकला—अहं जाणामि जो इस्सरस्स गरुअं धणुअं सज्जं करिस्सदि सो ज्जेव एदाए णाहो भविस्सदि त्ति महाराअस्स णिच्चओ त्ति तं क्खु दुक्करं माणेदि अम्हाणं पिअसही (अहं जानामि। य ईश्वरस्य गुरु धनुः सज्यं करिष्यति स एवास्याः नाथो भविष्यतीति महाराजस्य निश्चय इति तत् खलु दुष्करं मन्यत आवयोः प्रियसखी)।

सीता—(दीर्घं निःश्वस्य) एव्वं ज्जेव (एवमेव)

मधुरिका—जधा रामस्स रमणिज्जा आकिदी सो बलीओ वि ण तं करिस्सदि त्ति णिच्चिदं (यथा रामस्य रमणीयाऽऽकृतिः स बलवानपि न तत्करिष्यतीति निश्चितम्)।

सीता—ता ण सक्कुणोमि जीविदुं (तन्न शक्नोमि जीवितुम्) (मूर्च्छति)

चन्द्रकला—अम्मो परित्ताअंदु देवा सीदा मुम्मइ (अहो परित्रायन्तां देवाः। सीता मूर्च्छति)।

रामः—(सहसोपसृत्य) न भेतव्यम्। इयं मम-प्रिया कथं (इत्यर्धोक्ते मौनं भजति)

मधुरिका—साअदं अज्जस। अम्हाणं पिअ-सही जधा सोअणीआ ण भवे तं करेदु अज्जो (स्वागतमार्यस्य। आवयोः प्रियसखी यथा शोचनीया न भवेत्तत्करोत्वार्यः)

रामः—श्रुतं मया सर्वम्। किन्तु संशय-मेकं निराकर्त्तुं किमपि पृच्छामि भवत्यौ।

मधुरिका—पुच्छदु अज्जो (पृच्छत्वार्यः)।

रामः—कोऽस्या महाभागायाः पिता।

चन्द्रकला—बह्मण्णाणं अग्गणी भअवं रा-एसी जणओ (ब्रह्मज्ञानामग्रणीर्भगवान्राजर्षिर्जनकः)

रामः—(स्वगतम्)

अगम्या नैवेयं प्रवरकुलजा क्षत्रतनया।
मयि स्नेहश्चास्या विधिविहित एवास्ति परमः॥
मनो मेऽस्यां रक्तं सकलमपि यज्ज्ञापयति तत्
जगत्स्रष्ट्रा सृष्टा वरतनुरियं मां सुखयितुम्॥२८॥

(प्रकाशम्) नूनं सफलमनोरथेयं भविष्यति। अहमप्येनामदृष्ट्वा शून्यमिव जगन्मन्ये (इत्यर्धोक्ते

विषादं नाटयति। स्वगतम्) किं मया विवेकविनयापेतमुक्तम्

चन्द्रकला—(स्वगतम्) जाणिदं जं जाणिदव्वं (ज्ञातं यज्ज्ञातव्यम्)

मधुरिका—महाराअस्स पुणो एत्थ महन्तो दुक्करो पणो (महाराजस्य पुनरत्र महान् दुष्करः पणः)।

रामः—तदपि श्रुतं मया। तत्रोच्यते—

शैवं धनुर्यदि मनुष्यबलेन सज्यम्।
शक्यं न शोचतमियं भविता ममैव ॥
राज्ञा कृतो यदि पणस्तु विवाहमस्याः।
रोद्धुं ततस्तु विफला बत नौ सुखाशा ॥२९॥

मधुरिका—पिअं एदं मे (प्रियमेतन्मे)। (संस्कृतमाश्रित्य)

प्रतिजानासि वीर त्वं कर्त्तुं यत्कर्म दुष्करम्।
त्वां विलोक्यामहाकायं शङ्के तत्स्यान्न वेत्यहम्॥३०॥

चन्द्रकला—(संस्कृतमाश्रित्य)

तेजसा न तु देहेन कर्म तेजस्विनां भवेत्।
महाकायं द्विपं हन्ति लघुकायोपि केसरी ॥३१॥

(नेपथ्ये)

इदो इदो महाराओ (इत इतो महाराजः)।

(सीता संज्ञां लभते सर्वाः पश्यन्ति)

रामः—अहो भगवान्। (स्वगतम्)

येन ब्रह्म नृपासने स्थितवता साक्षात्कृतं दुर्ग्रहम्।
यस्मादेव महर्षयोपि नृपतेर्जानन्ति विद्यां पराम्॥
संसारेपि वसन्निरस्तविषयो योगेन नुन्नाशयः।
मन्दं मन्दस्मितः स शान्तवदनो राजर्षिरागच्छति ॥३२॥

अतो न युक्तमत्र स्थातुमिदानीम् तद्गच्छामि।

(निष्क्रान्तः)

सीता—सहीओ किं एत्थ करिस्सम्ह (सख्यौ किमत्र करिष्यामः)

चन्द्रकला—किं एत्थ नवं करणीअं। जदा महाराओ आअच्छदि तं अहिवादेहि (किमत्र नवं करणीयम्। यदा महाराजोऽत्रागच्छति तमभिवादय)।

सीता—ण सुदो भवे महाराएण मह संदाववुत्तंतो (न श्रुतो भवेन्महाराजेन मम सन्तापवृत्तान्तः)।

मधुरिका— एव्वं संकं मा करेहि (स्मित्वा) सुदो वि वुत्तंतो भवे संदावस्स पडिआरं करिस्सदि सो (एवं शङ्कां मा कुरु। श्रुतोपि वृत्तान्तो भवेत्सन्तापस्य प्रतिकारं करिष्यति सः)।

सीता—महं दुक्खे तुमं परिहसेसि (मम दुःखे त्वं परिहससि)।

मधुरिका—तुह दुक्खस्स संती भूदा (तव दुःखस्य शान्तिर्भूता)।

सीता—पुणो परिहसेसि। (पुनः परिहससि)

मधुरिका—ण अअं परिहासो सुणाहि जधा रामेण विणा तुमं संतत्ता तह ज्जेव रामो वि तुए विणा संतत्तो (नायं रिहासः, श्रृणु, यथा रामेण विना त्वं सन्तप्ता तथैव रामोपि त्वया विना सन्तप्तः)।

सीता—अवेहि अज्जउत्तस्स णामं कहेसि (अपेहि, आर्यपुत्रस्य नाम कथयसि)।

मधुरिका—तुह सो अज्जउत्तो अम्हाणं मित्तो (तव स आर्यपुत्रोऽस्माकं मित्रम्)।

सीता—(सक्रोधमिव) कधं तुए जाणिदं (कथं त्वया ज्ञातम्)

मधुरिका(कर्णे) एव्वं विअ (एवमिव)

सीता—सच्चं (सत्यम्)

मधुरिका—सच्चं (सत्यम्)

सीता—(सलीलम्) अवेहि असंबद्धं प्पलवसि ण ते वअणं सुणिस्सं (अपेहि, असम्बद्धं प्रलपसि । न ते वचनं श्रोष्यामि) ।

(नेपथ्ये)

इदो इदो महाराओ (इत इतो महाराजः)

चन्द्रकला—आअदो महाराओ (आगतो महाराजः)

(ततः प्रविशति महाराजश्चेटया सह)

जनकः—विद्या बुधस्य विमला सफला न तावत् ।
यावन्न सा गुणवते पुरुषाय दत्ता ॥
कन्यां विनीय परिपोष्य च तां न यावत् ।
योग्याय नैव ददते न कृती पिता स्यात् ॥२३॥

सीता—(उपसृत्य) ताद वन्दामि (तात वन्दे) (प्रणमति)

जनकः—वत्से सर्वगुणनिधिं भर्त्तारं लभस्व ।
पितुर्भर्त्तुश्च कुलशोभावहा भव ।

सख्यौ—पिअसहि वरं विअ तादस्स आसिसं अहिणंदेहि (प्रियसखि वरमिव तातस्याशिषमभिनन्दय) ।

सीता—(सास्रम्) देसंतरं पेसदि मं तादो (देशान्तरं प्रेषयति मां तातः) ।

जनकः—देशान्तरं वा जननान्तरं वा ।
यात्येव जीवः स्वकृतैर्निबद्धः ॥
गत्वा न यो ह्लेपयति स्वबन्धून् ।
न दुर्गतिं वा लभते स मान्यः ॥३४॥

यदा कदापि गन्तव्यं त्वया वत्से भविष्यति ॥
विप्रयोगस्तदा नौ च हृदये तापयिष्यति ॥३५॥

अथ च—दुःखान्यपरिहार्याणि सोढव्यानि सदा मुदा ।
सुखोदर्केषु दुःखेषु न कार्यं शोकवन्मनः॥३६॥

सीता—(सास्रम्) जधा तादो धीरो तह ण अहं धीरा (यथा तातो धीरस्तथा नाहं धीरा) ।

जनकः—अवसरे धीरत्वमापतति त्वं तु प्रियप्रेम्णाऽस्मानचिरेणैव विस्मरिष्यसि ।

सीता—एव्वं कहेदि तादो (एवं कथयति तातः)

(संस्कृतमाश्रित्य)

यावद्देहे चेतना मे यावन्न स्मृतिविभ्रमः ॥
तावत्कथं विस्मरिष्ये तातस्य चरणौ शुभौ ॥३७॥

जनकः—भवतु, तिष्ठतु, समुदाचारः । अन्यच्चावश्यंभाविनो विप्रयोगस्य कीर्त्तनेनालम्—

अवश्यम्भावि यद्दुःखं न स्मर्तव्यमनागतम् ॥
कर्त्तव्यमन्यद्यच्छीघ्रं स्मृतं विस्मारयेत्तु तत् ॥३८॥

तत्त्वं सखीभ्यां जयया च सह प्रासादपृष्ठे बुद्धिवर्धनपीठे मनो विनोदय ।
(चेटीं प्रति) जये त्वं भगवन्तं विश्वामित्रं ब्रूहि, सन्ध्यामुपास्य भगवन्तं किमपि निवेदयितुमिच्छामि तत्प्रतिपाल्यतां मदागमनमिति ।

सर्वाः—जं महाराओ आणवेदि (यन्महाराज आज्ञापयति) (निष्क्रान्ताः)

जनकः—इतः षष्ठेहनि मम सत्रान्तस्नानम्। तदार्षेण विधिना सीतां रामाय दास्यामि। यतः—

कुलं रघूणां परमं प्रशस्यम्।
रामः सुधीः क्षत्रगुणाकरश्च ॥
सीतानुरागो दृढ एव तस्मिन्।
स चापि तां कामयते किमन्यत् ॥३९॥

यश्च शाम्भवधनुरारोपणरूपः पणो मया कृतस्तत्र रामः प्रभवितेति विश्वामित्रेणाहं स्वास्थ्यं लम्भितः (विचिन्त्य) यदि रामो नागमिष्यन्न तत्कर्तुमन्यः प्राभविष्यज्जामदग्न्यं विश्वामित्रं च विहाय। तदा च मूढस्येव मे पणो निष्फलोऽभविष्यत्। भगवान् भार्गवस्तु शाश्वते ब्रह्मणि स्थितो विश्वामित्रश्च वनस्थोन्ये बहवो वीरा मम पणं श्रुत्वा सविश्रम्भमागत्य ह्रीणा अपि मामसम्भावितपणविधानकुशलमतितरां ह्रेपयन्तो गताः। सम्प्रति विश्वामित्रवचनैर्विश्वासितो

महाभागमात्मानं मन्ये । (परिक्रम्य भूयो विचिन्त्य) कथम्—मम परमः सखा महाराजो दशरथोऽपि ज्ञापितो भवेत् । (पुनर्विचिन्त्य) नूनं मयाभ्यर्थितः सोऽत्रागमिष्यति । अद्यैव दूतं प्रक्षिपामि स राज्ञीभिः कुमाराभ्यां भगवता वशिष्ठेन मन्त्रिभिर्भृत्यैश्च सहागच्छत्विति । अथ च—

आह्वयामि नृपांस्तांस्तान् यैर्न सज्यं धनुः कृतम् ॥
निराशैः प्रयये तेपि पश्येयुरिममुत्सवम् ॥४०॥

यतः—असम्भावी पणस्तैर्मे ज्ञापितोऽभूदविक्रमैः ॥
तदा ह्रीणो ह्रेपयिष्ये लघुशक्तीन् सदोगतान्॥४१॥

ततश्च—दृष्ट्वा चिराद्दशरथं सुहृदं गृहे मे ।
तस्यात्मजाय तनयां विधिना प्रदाय ॥
यूनोः समानगुणयोश्च विलोक्य योगम् ।
लब्धा मनो मम तदा परमां प्रसत्तिम्॥४२॥

(निष्क्रान्तः)

॥ इति षष्ठोऽङ्कः ॥



## ॥ सप्तमोऽङ्कः ॥

(ततः प्रविशन्ति सदस्युपविष्टाः सभ्या महाराजो दशरथः सकुमारः महाराजो जनकः सपरिवारो भगवान् वशिष्ठो विश्वामित्रो पुरोधाः शतानन्दो मन्त्रिणो राज्ञः परिजनोऽन्ये राजानश्च) ।

जनकः (उत्थाय)

संगच्छध्वं संवदध्वं समाध्वम् ।
सर्वैर्ब्रह्मज्योतिषास्तं तमोऽस्तु ॥
कृत्वा धर्म्यं कर्म लोके सुखाय ।
नित्ये रूपे स्वे सदा स्थीयतां च ॥ १ ॥
कर्मायत्तं सर्वमेतत् कदापि ।
कर्म त्यक्तुं कोपि नैवास्ति शक्तः ॥
तस्माद्धर्म्याण्येव कर्माणि कृत्वा ।
कार्यो नित्यं निर्मलः स्वान्तरात्मा ॥२॥
नानाधारास्वप्सु यथा सूर्य एकोप्यनेकवत् ।
दृश्यो भवत्येक आत्मा नानेवास्मास्वयं तथा ॥३॥
अथ च–यज्ञो विधेयो विधिनैव सर्वैः ।
यज्ञेन देवा वरदा भवन्ति ॥

ईशं समाराध्य नरश्च यज्ञे ।
यथेप्सितं यज्ञफलं भुनक्ति ॥ ४ ॥

अतीतेऽह्नि मम यज्ञान्तस्नानमभूत् । तदैव च मयाऽऽर्षेण विधिना रघुकुलप्रदीपस्य महाराजो दशरथस्य ज्येष्ठाय पुत्राय सकलक्षत्रकुलकमलाहस्कराय भुजबलोत्थापितभग्नानेकमहाबलवीराविचालितोग्रचापाय भीमयातुधानवधनिवारिततपोवनभयसंशयाय सुकृतिजनमनःकुमुदप्रसादहेतवे सर्वनयनाभिरामाय रामचन्द्राय रसोद्भवा दुहिता सीता प्रदत्ता । अथवाऽनुरक्तानुरूपवराभिलाषिण्याः प्रदाने के वयं प्रभवः । यूनोस्तुल्यगुणप्रीतिरपरिच्छेद्याऽभिनन्दितेत्येव वक्तव्ये केवलं सुबोधाय व्यवहारायात्र कन्या प्रदत्तेत्युच्यते । ततश्च रामतुल्यगुणान् रामस्यात्मभागानिव भरतलक्ष्मणशत्रुघ्नानायुष्यतीनां माण्डव्यूर्मिलाश्रुतकीर्त्तीनां स्वा-

मिनोऽभावयम् । तदेष उभयोस्तुल्यगुणयो राजवंशयोः सम्बन्धः सर्वैर्भवद्भिरनुमतश्चेत्त्रिः स्वस्तीति भवन्तो ब्रुवन्तु ।

सर्वे—स्वस्ति स्वस्ति स्वस्ति ।

(नभसः पुष्पवृष्टिर्भवति)

दशरथः—(उत्थाय)

नेता ब्रह्मविदां गुरुर्यमवतामग्र्यो नृपाणां सताम् ॥
मित्रं मे जनको नृपर्षिरमले वंशे निजे राजते ।
पुत्रान्मे विनयं श्रुतं च भगवान्प्रादाद्वशिष्ठो मुदा ।
सम्बन्धोऽयमिहास्ति तुल्यगुणयोस्तस्मान्म-
मानन्ददः ॥५॥

वशिष्ठः—

शिष्यस्य मे दशरथस्य सुता विनीताः ।
वेदं श्रुतं समधिगत्य सदाप्तबोधाः ॥
वीरा महास्त्रकुशलाश्च विवाहमेषाम् ।
दृष्ट्वा मनो मम मुदं परमां बिभर्त्ति ॥६॥

विश्वामित्रः—मान्यः सखा दशरथो मम शुद्धकर्मा ।

वैदेह एष जनको गुरुवच्च सेव्यः ॥

रामोऽस्त्रवेदमखिलं परमं मदादात् ।

सम्बन्ध एष कुरुते सुखि मानसं मे ॥७॥

शतानन्दः—

शुद्धवंशजयो राज्ञोः संबन्धोयं सुखावहः ॥

राजतां जनसौख्याय रत्नकाञ्चनयोरिव ॥८॥

(नेपथ्ये)

आः, एतावद्गुरु कार्यं मामनिवेद्यैव राजभिः कृतम् ।

वशिष्ठः—अहो भगवान्भार्गवो भ्रूभङ्गेन भुवनानि भाययन्नित एवैति ।

(सर्वे उत्थाय नतशिरसो भवन्ति)

रामः—(उत्थाय) न भेतव्यम् ।

हन्तुमप्यागताः क्रुद्धाः शस्त्रैः शापेन वा यदि ॥

वाचा विनीतया विप्रा जहत्येव क्रुधं पराम् ॥९॥

(ततः प्रविशति सक्रोध इव परशुरामः)

परशुरामः—(सर्वानपश्यन्निव)

क्षत्रा ब्रह्मविघातदर्शितबला धर्मागमोपेक्षिणः ।
क्रूराः शासति ये नयाभिनयतो दण्डेन नम्राः प्रजाः॥
संवर्तोत्ककरालमारुतसखं वेगेन कुर्वञ्जितम् ।
तेषामेव सदा वपूंषि परशुर्मे शोणितं पीयते ॥१०॥
ये पुनः प्रकृतीः पान्ति धर्मेणार्हन्ति च द्विजान् ॥
तेषां मनो मम बलं करोत्येवाभयं सदा ॥११॥

(स्वगतम्) कथं विहितप्रियकर्माणोपि ममैते बिभ्यति

वशिष्ठः—प्रणमामि भगवन् ।

परशुरामः—गृह्यतां मम प्रतिप्रणामः ।

विश्वामित्रः—कौशिको विश्वामित्रः प्रणमति ।

परशुरामः—शाश्वतं राजतां भवतो ब्रह्मत्वम् ।

जनकः—वैदेहो जनकः प्रणमति ।

परशुरामः—

महर्षीणामपि गुरुर्यष्टा दाता महारथः ॥
कामाशिषं मत्कामयसे तथापि भव मानभाक् ॥१२॥

दशरथः—साविन्रो दशरथोऽभिवादयते ।

परशुरामः—पुत्रास्ते शाश्वतं यशो लभन्ताम् ।

रामभरतलक्ष्मणशत्रुघ्नाः—भगवन् (स्वगोत्रनामग्रहणपुरःसरम्) अभिवादयामः ।

परशुरामः—दीर्घायुषः पुण्ययशसो भूयास्त ।

(अन्ये परशुरामं प्रणमन्ति तत आशिषो लभन्ते च)

परशुरामः—(जनकं प्रति)

शैवं धनू रामबलेन भग्नम् ।
श्रुत्वा जवेनैमि तपो विहाय ॥
कृतं कथं तद्वद बालकेन ।
नोत्पाटयेत् सिंहशिशुर्हि वृक्षम् ॥१३॥

जनकः—(सभयमिव) भगवन् यस्तद्धनुः सज्यं करिष्यति तस्मै दुहितरं सीतां दास्यामीति-मया कृतः पणोऽभूत् ।

परशुरामः—जानाम्येव तत् । ततः—

जनकः—आयुष्मता रामेण यदा तद्धनुरुद्धृतं तदा तद्भग्नम् ।

परशुरामः—(रामं प्रति) अप्येवमेव ।

रामः—क्षन्तुमर्हति भगवान् मे बालचापलम् ।

परशुरामः—किं बालचापलम् ।

रामः—तदेवम् ।

नाततस्य चिरात्तस्य धनुषस्तां पुराणताम् ।
अमत्वैव मया दीर्घमाततं तद् द्विधाऽभवत् ॥१४॥

परशुरामः—तन्ममापि धनुरधिज्यं कुरु (धनुर्ददाति)

रामः—यथाज्ञापयति भगवान् । (धनुर्गृह्णाति)

परशुरामः—तिष्ट । पश्यामीव ते वैष्णवं रूपम् । (स्वगतम्) अहो पूर्णांशोऽस्मि ।

पापा अधर्मनिरता बलिनः खला ये ।
ब्रह्मद्विषो विधिवशान्न हता मया च ॥
तान्को हनिष्यति गते तपसे मयीह ।
चिन्ता चिराय महती मम मानसेऽभूत् ॥१५॥

सम्प्रति-अंशभूतो दैत्यरिपो रामोऽयं सर्वधर्मवित् ।
मयारब्धं न पूर्णं यत्तद्विधाता न संशयः ॥१६॥

(प्रकाशम्) वत्स दाशरथे, अथवा विकुण्ठनिलय देव। तपोवने त्वया हतानां रक्षसां वृत्तान्तं श्रुत्वा रामरूपे वर्त्तमानं पुरुषोत्तमं त्वाममन्ये। सम्प्रति तत्त्वतस्त्वां विज्ञाय सप्रणामं स्वधनुस्तुभ्यमर्पयामि।

पापानां मारणार्थैव प्रयोक्तव्यमिदं धनुः ॥
धर्मात्मानः प्राप्नुवन्तु सदा त्वद्भयं प्रभो ॥१७॥

रामः—एवं भविष्यति।

परशुरामः—धर्मेण ये लोका मे जितास्तान्सर्वेभ्य एतेभ्यः सभ्येभ्यो दत्वा स्वं तत्त्वरूपं लब्धुं गच्छामि।

वशिष्ठः—भगवन् कथं पुण्यार्जिता लोकास्त्यज्यन्ते भगवता।

परशुरामः—

क्षीणे पुण्यधने काले तेभ्यो वेश्यागृहादिव।
निःसार्यते मन्दमतिरनास्था तेषु तन्मम ॥१८॥

चिदानन्दमयं ब्रह्म शाश्वतं यत्परावरम् ।
तस्मिन् स्थितिर्यथा नित्यं भविता तद्विवेक्तुतम् ।१९।

विदूषकः—(स्वगतम्) शिग्धं कुदो ण णिक्कमदि एसो बुड्ढो रिच्छो (शीघ्रं कुतो न निष्क्रामत्येष वृद्ध ऋक्षः)

परशुरामः—तद्गच्छामि (शीघ्रं निष्क्रान्तः)

जनकः—अहो, अमितबलप्रभावो जामदग्न्यः । सम्प्रति शान्तकर्माऽभूत् । सम्प्रति क्षत्राः सुखं शयिष्यन्ते ।

रामः—पापिनस्तु पलायमाननिद्राः कम्पमानमनसो भविष्यन्ति यतो नाहं भगवता भार्गवेणादिष्टं पापनाशमुपेक्षिष्ये ।

दशरथः—अहो सर्वतेजोनिराकरिष्णु ब्रह्मत्वमस्य भगवतो भार्गवस्याभवत् ।

विदूषकः—(स्वगतम्) गदो वुड्ढो रिच्छो तहवि तस्स गुणाणि गाअंदि एदे (गतो वृद्धऋक्षस्तथापि तस्य गुणान् गायन्त्येते )।

विश्वामित्रः—मैवम् । तस्य पराक्रमेण बहवः क्षत्त्राः मृताः । तेन तस्य ब्राह्मं तेजो न महत्वमापत् । भगवतो वशिष्ठस्यर्षेर्ब्रह्मत्वं मादृशमपि तल्लिप्सया तिरस्कृतसर्वान्यबलमकरोत् । तच्च निराकरोति सर्वाण्यन्यानि तेजांसि न च प्रतिपक्षं हन्ति ।

वशिष्ठः—भवतु, उपक्रान्तासम्बद्धमेतदापतितम् ।

विश्वामित्रः—(ऊर्द्ध्वमवलोक्य) दिव्याभिनन्दनमादातुं सपत्नीका दशरथकुलप्रदीपाः कुमारा मध्ये तिष्ठन्तु ।

वशिष्ठः—किमर्थम् ।

विश्वामित्रः—पश्यतोर्ध्वं सर्वे यूयम् (सर्व ऊर्ध्वं पश्यन्ति) ।

ब्रह्मा विष्णुर्महेशो दनुजरिपुपतिर्नार-
दस्तुम्बुरुश्च ।
पुष्पाण्यादाय सर्वे त्रिदिवतरुभवा-
ण्यागता मङ्गलार्थम् ।

पत्नीभिः सार्धमेतान् दशरथतनयान्
वीक्ष्य मध्ये स्थितान्नः ।
हर्षं नाकौकसां ते कुसुमविकिरणैर्द-
र्शयिष्यन्ति पूर्णम् ॥२०॥

दशरथजनकौ—सत्यम् एवमेव ।

(ततः प्रविशन्ति चतस्रो वध्वः परिजनेन सह । स्वेन स्वेन पत्या सह वामभागेषु तिष्ठन्ति च । सवाद्यध्वनि पुष्पवृष्टिर्नभसो भवति) ।

सर्वे—स्वस्ति, स्वस्ति, स्वस्ति ।

विश्वामित्रः—सखे दशरथ किमन्यत्ते प्रियं करवाणि ।

दशरथः—अपुत्रदुःखं नष्टं मे सम्बन्धी जनकोऽभवत्।
सुता वीराः प्रीतिमन्तः किमिच्छेयमतः परम्॥२१॥

विश्वामित्रः—तथापीदमस्तु—

(भरतवाक्यम्)

रक्षन्तु वर्णा धर्मं स्वं प्रजाः स्युरनुपप्लुताः ॥
त्वं राजसिंह पृथिवीं सागरान्तां प्रशाधि च ॥२२॥

॥ इति निर्वहणाङ्कः षष्ठः (!) ॥

॥ समाप्तमिदं यज्ञनाटकम् ॥

